कुरुक्षेत्र-विश्वविद्यालयस्य,
भारतीय विद्यासंस्थान हस्तलिखितग्रन्थसंग्रहालय के
ग्रन्थों का

# वर्णानात्मक सूचीपत्र

(प्रथम भाग)




सम्पादक :
स्थाणुदत्तशर्मा शास्त्री



कुरुक्षेत्र-विश्वविद्यालय, कुरुक्षेत्र
१९५८

कुरुक्षेत्र-विश्वविद्यालय-संस्कृत-ग्रन्थमालायां सप्तमं प्रसूनम् ।

—:o:—

कुरुक्षेत्र-विश्वविद्यालयस्थ,
भारतीय विद्यासंस्थान हस्तलिखितग्रन्थसंग्रहालय के
ग्रन्थों का

# वर्णानात्मक सूचीपत्र

(प्रथम भाग)




सम्पादक :
स्थाणुदत्तशर्मा शास्त्री
एम्०ए०, एम्०ओ०एल्०
अध्यक्ष, हस्तलिखित-संग्रहालय

कुरुक्षेत्र-विश्वविद्यालय, कुरुक्षेत्र
१९७८

शर्मा, स्थाणुदत्त (सं० १९६० वि०)

254087

मूल्य : पन्द्रह रुपये



मुद्रक :
टी० फिलिप
व्यवस्थापक
मुद्रण तथा प्रकाशन विभाग
कुरुक्षेत्र विश्वविद्यालय, कुरुक्षेत्र ।

## प्राक्कथन

कुरुक्षेत्र विश्वविद्यालय का प्राच्यविद्यासंस्थान प्रारम्भ से ही हस्तलिखित ग्रन्थों का संग्रह करता रहा है। आज इसके संग्रहालय में चार हज़ार से भी अधिक ग्रन्थ एकत्र हैं। इनका सूचीपत्र दो भागों में प्रकाशित हो चुका है। उसमें प्रत्येक पुस्तक के नाम, ग्रन्थकर्त्ता तथा विषय आदि का निर्देश किया गया है। आज उन ग्रन्थों का यह वर्णनात्मक सूचीपत्र प्रकाशित किया जा रहा है। इसमें ग्रन्थों के नाम, रचयिता आदि के अतिरिक्त उनकी लिपि, पत्र संख्या एवं पाठ संख्या देकर प्रारम्भ और समाप्ति की कुछ पंक्तियां भी नमूने के तौर पर दे दी गई हैं। सबसे अन्त में ग्रन्थ-सम्बन्धी विशेष जानकारी देने के लिए सम्पादक महोदय ने अपनी टिप्पणी भी जोड़ दी है। इस प्रकार से दूर देशों में बैठे हुए विद्वान् एवं अनुसंधान करने वाले छात्र इस सूची की सहायता से अपने अभीष्ट ग्रन्थ की पूरी पूरी जानकारी प्राप्त कर सकेंगे। उन्हें हमारे पुस्तकालय तक आने का कष्ट न करना पड़ेगा। वे वहीं बैठे अपने अपेक्षित ग्रन्थों की मूल मातृका अथवा प्रतिलिपि मँगा सकेंगे।

ग्रन्थ सम्पादन तथा अनुसन्धान के कार्यों में विद्वान् लोगों को अधिकाधिक सहायता पहुँचाना ही इस संग्रहालय का ध्येय है। उसी की पूर्ति के लिए यह प्रसून उन्हें समर्पित है।

आशा है कि इसी प्रकार के चालीस प्रसून और हम समर्पित कर सकेंगे।

कर्त्तारसिंह वलाल
पुस्तकालयाध्यक्ष,
कुरुक्षेत्र विश्वविद्यालय,
कुरुक्षेत्र।

२४ अगस्त, १९७८
कुरुक्षेत्र विश्वविद्यालय।

## इस माला के प्रकाशन

कुरुक्षेत्र-विश्वविद्यालय-संस्कृत-ग्रन्थमालायाः—

| | | मूल्यम् |
|---|---|---|
| १. प्रथमं प्रसूनम् | | |
| कुरुक्षेत्र महाकाव्यम् | ... | १-५० |
| २. द्वितीयं प्रसूनम् | | |
| हस्तलिखित-ग्रन्थ-संग्रहालयस्थ-ग्रन्थ-सूची (प्रथमो भाग) | ... | ५-०० |
| ३. तृतीयं प्रसूनम् | | |
| परमानन्दकृतं भृङ्गदूतम् | ... | |
| ४. चतुर्थं प्रसूनम् | | |
| कृष्णपतिकृता मेघदूत-टीका | ... | १५-०० |
| ५. पञ्चमं प्रसूनम् | | |
| नारायणयतिकृता कुसुमाञ्जलिकारिका-व्याख्या | ... | २०-०० |
| ६. षष्ठं प्रसूनम् | | |
| हस्तलिखित-ग्रन्थ-संग्रहालयस्थ-ग्रन्थ-सूची (द्वितीयो भागः) | ... | १५-०० |
| ७. सप्तमं प्रसूनम् | | |
| हस्तलिखित-ग्रन्थ-संग्रहालयस्थानां ग्रन्थानां विवरणात्मकं सूचीपत्रम् | ... | १५-०० |

कुरुक्षेत्र-विश्वविद्यालय-संस्कृत-ग्रन्थमालायां सप्तमं प्रसूनम् ।

—:o:—

कुरुक्षेत्र-विश्वविद्यालयस्थ,
भारतीय विद्यासंस्थान हस्तलिखितग्रन्थसंग्रहालय के
ग्रन्थों का

# वर्णात्मक सूचीपत्र

(प्रथम भाग)




सम्पादक :
**स्थाणुदत्तशर्मा शास्त्री**
एम्०ए०, एम्०ओ०एल्०
अध्यक्ष, हस्तलिखित-संग्रहालय

कुरुक्षेत्र-विश्वविद्यालय, कुरुक्षेत्र
१९७८

आशा है कि इसी प्रकार के चालीस प्रसून और हम समर्पित कर सकेंगे ।

**कर्त्तारसिंह दलाल**
पुस्तकालयाध्यक्ष,
कुरुक्षेत्र विश्वविद्यालय,
कुरुक्षेत्र ।

२४ अगस्त, १९७८
कुरुक्षेत्र विश्वविद्यालय ।

# इस माला के प्रकाशन

कुरुक्षेत्र-विश्वविद्यालय-संस्कृत-ग्रन्थमालायाः—

| | | मूल्यम् |
|---|---|---|
| १. प्रथमं प्रसूनम् | | |
| कुरुक्षेत्र महाकाव्यम् | ... | १-५० |
| २. द्वितीयं प्रसूनम् | | |
| हस्तलिखित-ग्रन्थ-संग्रहालयस्थ-ग्रन्थ-सूची (प्रथमो भाग) | ... | ५-०० |
| ३. तृतीयं प्रसूनम् | | |
| परमानन्दकृतं भृङ्गदूतम् | ... | |
| ४. चतुर्थं प्रसूनम् | | |
| कृष्णपतिकृता मेघदूत-टीका | ... | १५-०० |
| ५. पञ्चमं प्रसूनम् | | |
| नारायणयतिकृता कुसुमाञ्जलिकारिका-व्याख्या | ... | २०-०० |
| ६. षष्ठं प्रसूनम् | | |
| हस्तलिखित-ग्रन्थ-संग्रहालयस्थ-ग्रन्थ-सूची (द्वितीयो भागः) | ... | १५-०० |
| ७. सप्तमं प्रसूनम् | | |
| हस्तलिखित-ग्रन्थ-संग्रहालयस्थानां ग्रन्थानां विवरणात्मकं सूचीपत्रम् | ... | १५-०० |

क्रमसंख्या १

## मनोदूतम् ।

श्रीरामराम शर्मा रचित ।
काव्य । बंगला लिपि । पत्र-संख्या ३ ।
पत्र-प्रमाण ३३.५ × २०.५ सैं०मी० ।
पंक्तियां २६ प्रतिपृष्ठ । अक्षर ३२ प्रतिपंक्ति ।
पाठसंख्या ६२ । केवल प्रथम परिच्छेद ।

### प्रारम्भ :—

ॐ नमो गणेशाय ॥

यावत्स्यात् क्षितिमण्डले तव कुलं स्थास्यामि ते मन्दिरे
कृत्वाङ्गीकृतमित्थमस्ति भगवानद्यापि यस्यालये ।
यस्यासीद् भगिनीसुतो भवतरिश्चैतन्यदेवप्रभु—
र्यो जग्राह चतुर्भुजैर्विधया दत्ते शुभे वासमी ॥१॥

तस्य श्रीयुतविष्णुदासकृतिनो वंशे समद्भूतवान्
नत्वा कृष्णपदारविन्दयुगलं श्रीरामरामद्विजः ।
ग्रन्थं संरचयाञ्चकार तु मनोदूताभिधानं मुदा
मित्रापत्यभयाकुलो निजमनो दातुं हरौ व्यञ्जयन् ॥२॥

### समाप्ति :–

इति श्रीरामरामशर्म्मविरचिते मनोदूताभिधाने द्विजदूतसंवादे प्रथमः परिच्छेद इति । श्रीयुक्त भवनाथ सार्वभौमात्मजश्रीलोकनाथ-शर्मणोऽक्षरं श्रीयुक्तचन्द्रनाथभट्टाचार्य्यस्य पुस्तकमिदम् ॥❀॥❀॥

१. लिखाई शुद्ध है ।

२. वङ्गीय साहित्य परिषद् २४३/१, अपर सर्कुलर रोड, कलकत्ता के एक हस्तलिखित की प्रतिलिपि है ।

—:o:—

क्रमसंख्या २

## कोकिल सन्देशः ।

वेङ्कटाचार्य रचितः ।
काव्य । देवनागरी लिपि । पत्रसंख्या २० ।
पत्र-प्रमाण २१.८×१७.२ सैं०मी० ।
पंक्तियां १५ प्रति पृष्ठ । अक्षर १५ प्रतिपत्र ।
पाठ संख्या १४१ । सम्पूर्ण ।

### प्रारम्भ :–

पितरं तातयाचार्यं मातरं मौक्तिकांबिकाम्
त्रयीचूडागुरुमुखानपि (व) न्देय देशिकान् ॥१॥
भे (भ) व्य (स) न्दर्भ संभाव्यं काव्यं संदेशसंज्ञकम् ।
करोति वेंकटाचार्यश्चरितं कमलापतेः ॥२॥

### समाप्ति :–

इत्थं शौरि (:) स्वयमभिनयन्नध्वनीनापदानं
गा; पस्यांते दिवमिव हरिः प्राप्य तां राजधानीम् ।
अन्यानर्हैरनुपमरसैर्दिव्यभोगैर्विजह्रे
कालं दीर्घं सरसिजदृशा संगतस्सत्य एव ॥६१॥

इति श्रीशैलपूर्णतिलकशतक्रतुतातयाचार्यसूनुना वेंकटाचार्येणकृते रामायणकथासरसोदये कोकिलसन्देशे द्वितीयः समाश्वासः ॥ हरिः ॐ समाप्तश्चायं ग्रंथः ॥

१. लिखाई में यत्र तत्र अशुद्धियां भी हैं और अक्षर भी छूट गए हैं।
२. सरस्वती महल, तञ्जौर के एक हस्तलिखित की प्रतिलिपि है।

—:o:—

क्रमसंख्या ३

## चकोर सन्देशः ।

पेरुसूरि-रचितः ।
काव्य । देवनागरी लिपिः । पत्र-संख्या १९ ।



पत्र-प्रमाण २१.८×१७.२ सैं०मी०
पंक्तियां १६ प्रतिपृष्ठ । अक्षर १३ प्रति पंक्ति ।
पाठ संख्या १२४ । अपूर्ण ।

### प्रारम्भ :–

श्रीः । शुभमस्तु । अविघ्नमस्तु ॥
कर्तुं सेवामुपगतवता सुंदरेशोपकंठं
प्रत्युत्थानप्रणतिविधुरो व्याघ्रपादेन शप्तः ।
कामी कश्चित्पशुपतिपदांभोज विन्यस्त धन्ये
कैलासाद्रौ स्थितिमतनुत प्रेयसी-विप्रयुक्तः ॥१॥

### समाप्ति :–

सा चंद्रास्या चपलनयना कंबुकंठी सूकेशी
मुग्धालापा मधुरहसिता (मंदयाना न)⋯: ।
बिंबोष्ठीति व्यवहृतगुणास्तत्र सर्वेऽपि शब्दाः
साजात्येन त्वितरवनिता स्वेकशस्तत्प्रयोगः ॥४०॥
सैषा साध्वी मम विरहतः सांप्रत खिद्यमाना
संदेशोक्त्या⋯⋯⋯⋯जीवनीया यदास्ते ।
याया⋯ ⋯ ⋯ चित समये माकृथास्त्वं विलंबं
कालक्षेपं न खलु सहते चित्तजन्मा कठोरः ॥४१॥
तत्र स्थाने न तव पतगाधीश सा ⋯⋯
⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯
⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯
⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯ ⋯

(प्रबन्धोऽपूर्णः)

१. पाठ अनेक स्थानों पर खण्डित है।
२. सरस्वती महल, तञ्जौर के एक हस्तलिखित की प्रतिलिपि है।

—:o:—

क्रमसंख्या ४

## हंसदूतम् ।

कवीन्द्राचार्यरचितम् ।

काव्य । देवनागरी लिपिः । पत्र-संख्या २३ ।
पत्र-प्रमाण २१.८×१७.२ सैं० मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर १५ प्रतिपंक्ति ।
पाठसंख्या १७२ । सम्पूर्ण ।

## प्रारम्भ :–

श्रीसर्वविद्यानिधान कवीन्द्राचार्यसरस्वतीनां हंसदूताख्यं काव्यम् ।

दुकूलं बिभ्राणो दलितहरितालद्युतिहरं
जपापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः ।
तमालश्यामांगो दरहसितलीलांचितमुखः
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ।।१।।

## समाप्ति :–

प्रपन्नः प्रेमाणं । भगवति सदा भागवतभाक्
पराचीनो जन्मावधि भवरसाद्भक्तिमधुरः ।
चिरं कोऽपि श्रीमान् जगति विदितः शांकरतया
धुरीणो धीराणामधिधरणि वैयासिकिरिव ।।३९।।

रसानामाधारैरपरिचितदोषः सहृदयैः
मुरारातिक्रीडा निबिडघटनारूपसहितः ।
प्रबन्धोऽयं बन्धोरखिलजगतां तस्य सहसा
प्रभोरन्तस्सार्द्रां प्रमदलहरीं पल्लवयतु ।।१४०।।

इति श्रीहंसदूताख्यं काव्यं समाप्तम् ।
यमाधारं सर्वागममणिगणानां सुकृतिनो
विदुर्गोपालाख्यं सकलविबुधालंकृतिवरम् ।
तदंगोत्थः श्रीमानवनिसुरविख्यातमहिमा
महाचार्यः कृष्णोत्तरगपदरामाभिध इदम् ।।१।।

खबाणांगक्षोणी (१६५०) गणित शरदि श्यामदलगा
मधोः षष्ठी वारो हिमकरसुतस्यापि शुभदः ।
मतः कालो यत्र प्रगुणहृदयानन्दजननं
व्यलेखीत्सत्काव्यं परमरमणीयं परमुदा ।।२।।युग्मम् ।



श्रीगोपालार्पणमस्तु ।। श्रीरस्तु ।। श्रीसर्वविद्यानिधानकवीन्द्राचार्य सरस्वतीनां हंसदूताख्यं काव्यम् ।।

१. लिखाई में कहीं कहीं अशुद्धियां है ।
२. सरस्वती महल, तञ्जौर के एक हस्तलिखित की प्रतिलिपि है ।

—:o:—

क्रम-संख्या ५

# पदमञ्जरी ।

हरदत्त रचित ।
व्याकरण । दे० ना० लिपि । पत्र संख्या १९५ ।
पत्र-प्रमाण २०.५×१६.४ सैं०मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर २१ प्रतिपंक्ति ।
पाठसंख्या २०४७ । अपूर्ण ।

## प्रारम्भ :–

.........–प्रधान पुरुषात्मकमस्वतन्त्र
मेतत्समस्तमधितिष्ठति यः स्वतन्त्रः ।
तस्मै शिवाय परमाय दशा... ...
साम्बाय...............–विहितप्रणामः ।।
स्वं स्वं मनोरथमवाप्तुमपोढविघ्नं
यस्य प्रसादमनवाप्य न शक्नुवन्ति ।
पद्मासनप्रभृतयः प्रथमेऽपि देवाः
तद्वस्तुहस्त... ... ... ... ... प्रसन्नम् ।।
तातं भद्रकुमारार्यं प्रणम्याम्बां श्रियं तथा ।
ज्येष्ठं चाग्निकुमारार्य-आचार्यमपराजितम् ।।
यश्चिराय हरदत्तसंज्ञया
... .. ... ... ... ... दिक्षु दक्षिणः ।
उज्जहार पदमञ्जरीमसौ
शब्दशास्त्रसहकारपादपात् ।।

## समाप्ति :–

॥ अर्थवदधातुरप्रत्ययः प्रातिपादिकम् ॥

अभिधेयवचनोऽर्थशब्द इति न प्रयोजनवचनः । अव्यभिचारात् । न निवृत्तिवचनः स्वयं निवृत्तस्य किं संज्ञया नयनवचनः । स्वस्वामि सम्बन्धस्यासम्भवात् । तच्चाभिधेयं चतुर्धा सिद्धं जातिगुणक्रियाद्रव्य भेदेन । गौः शुक्लः पाचको डित्थ इति यद्यर्थवतः संज्ञा अभावशश विषाणादीनां न प्राप्नोति । अर्थभावात् । माभूदनेन समास इति भविष्यति...... ... ...

१. लिखाई शुद्ध है।

२. सरस्वती महल लाइब्रेरी के एक हस्तलिखित की प्रतिलिपि है ।

– :o:—

क्रमसंख्या ६ ।

## पदमञ्जरी ।

हरदत्त रचित ।
व्याकरण । देवनागरी लिपि । पत्र-संख्या ४५ ।
पत्र-प्रमाण २०.४×१६.५ सैं०मी० ।
पक्तियां १६ प्रतिपृष्ठ । अक्षर २१ प्रतिपंक्ति ।
पाठसंख्या ४७२ । अपूर्ण ।

## प्रारम्भ :–

पतिप्तिश्च—त् नि—तत्वात् धातुग्रहणस्य परतो (र) पि स्युः तदपि न कर्मादीना भावात् । कर्मादिषु कारकेष्वेकत्वादिकायां च संख्यायां स्वादयो विधीयन्ते ।

## समाप्ति :–

जानपद—-

वर्ततेऽनया सा वृत्तिः । जीविकास्वरे विशेष इति । तमेव दर्शयति उत्सादिपाठात् अत्रिकृत इति । अमत्रं भानव कुण्डान्येति । क्रियाशब्दोऽयम् । कुडि दाहे गुरोश्च हल इत्यकारः । घटपर्यायस्तु कुण्डशब्दो नपुंसके



नियतः । यस्तु पत्यौ जीवति कुण्डः स्यादिति मनुष्यजातिवचनः ततो जातिलक्षणो ङीष् भवत्येव । कुण्डीयं न गोलीति । अमत्रवाचिनस्तु जातिशब्दादपि स्त्रीविषयत्वात् ङीष् विधीयते । आवपनं चेदिति । यत्र धान्यादि

१. लिखाई शुद्ध है।

२. सरस्वती महल लाइब्रेरी, तञ्जौर के एक हस्तलिखित की प्रतिलिपि है ।

—:o:—

क्रम-संख्या ७

## पदमञ्जरी ।

हरदत्त रचित ।
व्याकरण । देव नागरी लिपि । पत्र-संख्या ५४७ ।
पत्र-प्रमाण २०.४×१६.४ सैं० मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर १६ प्रतिपंक्ति ।
पाठसंख्या ५१६६ । अपूर्ण ।

## प्रारम्भ :–

पदमञ्जर्याम् प्रथमाध्यायस्य प्रथमः पाद :––

व्यक्तप्रधानपुरुषात्मकमस्यतन्त्र—
मेतत्समस्तमधितिष्ठति यः स्वतन्त्रः ।
तस्मै शिवाय परमाय दशाव्ययाय
साम्बाय सादरमयं विहितः प्रणामः ॥

स्वं स्वं मनोरथमवाप्तुमपेतविघ्नं
यस्य प्रसादमनवाप्य न शक्नुवन्ति ।
पद्मासनप्रभृतयः प्रथमेऽपि देवा —
स्तद्वस्तुहस्तिमुखमस्तु मयि प्रसन्नम् ॥

तातं रुद्रकुमाराख्यं प्रणम्याम्बां शिवं तथा ।
ज्येष्ठं चाग्निकुमाराख्यमाचार्यमपराजितम् ॥

वरिचराय हरदत्तसंज्ञया
विश्रुतो दयमु दिशु दक्षिणः ।
उज्जहार पदमञ्जरीमसौ
शब्दशास्त्रसहकारपादपात् ॥

**समाप्ति :-**

॥ तङानावात्मनेपदम् ॥

अथ कस्माल्लस्येत्यस्यानन्तरमेते संज्ञे न विहिते ··· संज्ञाभिर-
न्तर्निसिद्धोऽनयोस्समावेशो भवति तथा ·······

१. पाठ शुद्ध है।
२. गवर्नमेंट ओरियण्टल मनुस्क्रिप्टस् लाइब्रेरी, मद्रास के हस्तलिखित की प्रतिलिपि है।

—:0:—

क्रमसंख्या ८

## पदमञ्जरी ।

हरदत्तरचित ।
व्याकरण । देव नागरी लिपि । पत्रसंख्या ५१३ ।
पत्रप्रमाण २०.४×१.६४ सें० मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर १९ प्रतिपंक्ति ।
पाठसंख्या ४८७३ । अपूर्ण ।

**प्रारम्भ :-**

पदमञ्जरी । सप्तमाध्यायः । शुभमस्तु । ॥ इकोचि ॥ इकइति किमिति पूर्वत्र यदजग्रहणं तदत्रैव कर्तव्यम् । नपुंसकस्य झलः अत्रोदितेन हलन्तस्य न भविष्यति । सन्ध्यक्षराणां तु नपुंसकं नास्तीति प्रश्नः । अत एवावर्ज्य प्रत्युदाहरति । न हलन्तम् ।

**समाप्ति :-**

"नाडी" ॥ नडीशब्दो जातिलक्षणङीपन्तः । तन्त्रीशब्दोपि तृस्तृ-तन्त्रीभ्य ईरितीकारान्तः । बहुनादिरिति । उपसर्जन ···· ···· वायते स्वरिति प्रमाणीति । वेञोऽधिकरणे ल्युट् । कृत्यच इति णत्वम् ॥



इति हरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्य अध्यायस्य चतुर्थः पादः । अध्यायश्च समाप्तः ।

१. लिखाई शुद्ध है।
२. प्रारम्भ में पृष्ठ १ से पृष्ठ ४०४ तक एक अलग हस्तलिखित की प्रतिलिपि है और उससे आगे पुनः पृष्ठ १ से ४२२ तक दूसरे हस्तलिखित की प्रतिलिपि है।
३. ये दोनों ही गवर्नमेंट ओरियण्टल मैनुस्क्रिप्ट्स् लाईब्रेरी, मद्रास के हस्तलिखितों की प्रतिलिपियां हैं।

—:0:—

क्रमसंख्या ९

## पदमञ्जरी ।

हरदत्त विरचित ।
व्याकरण । देव नागरी लिपि । पत्रसंख्या १२३ ।
पत्र-प्रमाण १६.८×१६.४ सें० मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर १७ प्रतिपंक्ति ।
पाठसंख्या १०४५ । अपूर्ण ।

**प्रारम्भ :-**

किमेकं बाध्यतामित्यपेक्षायां येन नाप्राप्ते स बाधनीय इत्युच्यते । एवं तर्ह्यपेक्षताविषयङ्भवति । यदा तु नाप्राप्ते विध्यन्तर इदमारभ्यत इति कार्यसामान्यमपेक्षते तदा सर्वमेव बाधनीयं । एतेन पुरस्तादपवादन्या-येनाणि लोपमेव दीर्घत्वं बाधेत । (इको झल् । १।२।६।)

**समाप्ति :-**

गतिः समस्यते । अतिङश्च समासो भवतीति । तदेवं प्रपचति माङि लुङ् मा कार्षीरित्यादौ तिङन्तेन समासो माभूदित्येवमर्थं क्रियमाणं तिङ्-ग्रहणं सुपेति तृतीयान्तस्य निवृत्तिं सूचयति गत्युपपदयोस्तावत्सिद्धमिष्टं वृत्तावपि सुप्सुपेति नाभिसंबध्यत इति समुदायस्य······(उपपदमतिङ् । २ । २ । १६ ।।)

१. लिखाई शुद्ध है।

२. गवर्नमेण्ट ओरियण्टल मैनुस्क्रिप्ट्स् लाइब्रेरी, मद्रास के एक हस्तलिखित की प्रतिलिपि है।

—:o:—

क्रमसंख्या १०

## पदमञ्जरी।

हरदत्तविरचित।
व्याकरण। दे०ना० लिपि। पत्रसंख्या १७७।
पत्र-प्रमाण २०.०×१.६८ सैं०मी०।
पंक्तियां १६ प्रतिपृष्ठ। अक्षर २३ प्रतिपंक्ति।
पाठसंख्या २०३५। अपूर्ण।

### प्रारम्भ :-

प्रक्षिप्य नात्ते सा गोणी यस्याः पुनर्याद्दच्छिकं नाम सा गोणा। स्थलान्येति। कृत्रिमा। पुरुषव्यापारेण निष्पादिता। (जानपदकुण्डगोणस्थलभाजनाग० ४।१।४२।।)

### समाप्ति :-

।। शिवशमरिष्टस्य करे।। करोतीति कर इति पचाद्यच्। सामर्थ्यलभ्या षष्ठी समर्थविभक्तिरिति। सा पुनः कृद्योगलक्षणा कर्मणि भाषायां शिवताति (प्र) भृतीनां साधुत्वं चिन्त्यम्।।

इति हरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थाध्यायस्य चतुर्थः पादः।। समाप्तश्चाध्यायः।।

१—लिखाई शुद्ध है।

२—सरस्वती महल लाइब्रेरी, तञ्जौर के एक हस्तलिखित की प्रतिलिपि है।

—:o:—



क्रमसंख्या ११

## पदमञ्जरी।

हरदत्तविरचित।
व्याकरण। दे०ना० लिपि। पत्रसंख्या २०७।
पत्र-प्रमाण ३४.५×२०.८ सैं०मी।
पंक्तियां २२ प्रतिपृष्ठ। अक्षर ३१ प्रतिपंक्ति।
पाठसंख्या ६४१४। अपूर्ण।

### प्रारम्भ :-

श्री गणपतये नमः। श्री भद्रकाल्यै नमः।।
व्यक्तप्रधानपुरुषात्मकमस्वतंत्र-
मेतत् समयिस्तमति वृत्तियः स्वतंत्रः।।
तस्मै शिवाय परमाय दशाव्ययाय
सांबाय सादरमयं विहितं प्रणामः।।१।।

स्वं स्वं मनोरथमवाप्तुमवोढविघ्नं
यस्य प्रसादमनवाप्य न शक्नुवन्ति।।
पद्मासनप्रभृतयः प्रथमेपि देवा-
स्तद्धस्तहस्तिमुखमस्तमपि प्रसन्नम्।।

### समाप्ति :-

एवं शैरसोरपि द्रष्टव्यं। अथवा पूर्वमेव डारौरसो भवंतु। यासः से वचनं ज्ञापकं ये तिङादेशास्तेषां टेरेत्वं न भवतीति। अन्यथा थासः स इत्येव बाध्यं स्यात्। कर्त्तासे इति। तास्त्योरिति सलोपः।।

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयस्याध्यायस्य तुरीयश्चरणः। शुभमस्तु।।

१—लिखाई प्रायः अशुद्ध है।

२—ओरियण्टल रिसर्च इन्स्टीच्यूट लाइब्रेरी, बड़ौदा के एक हस्तलिखित की प्रतिलिपि।

—:o:—

क्रमसंख्या १२

## पद्मञ्जरी ।

हरदत्तविरचित ।
व्याकरण । दे०ना० लिपि । पत्रसंख्या १०५६ ।
पत्र-प्रमाण ३१.६×२०.० सैं०मी० ।
पंक्तियां ६ प्रतिपृष्ठ । अक्षर ३१ प्रतिपंक्ति ।
पाठसंख्या ६१५५ । अपूर्ण ।

### प्रारम्भ :—

।।प्रत्ययः । इह यदि सर्वानेव संज्ञिनः स्वरूपेण निर्दिश्य संज्ञा विधीयेत सन् प्रत्ययः क्यच् प्रत्ययः क्यङ् प्रत्यय इति ततो गौरवं स्यात् । अथ सप् प्रत्यय इति सनः सशब्दादारभ्य कपः पकारेण प्रत्याहाराश्रयेणात्र वा प्रदेशान्तरे वा संज्ञा विधीयेत तदानेकस्य पकारस्य सम्भवात् सन्देहः स्यात्

### समाप्ति :—

लिट् च । पेचिथ शेकिथेति । ऋतो भारद्वाजस्येति नियमादिट्, थलि च सेटीत्येत्वाभ्यासलोपौ । जग्ले मम्ल इति । आर्धधातुकत्वादातो लोप इटि चेत्याकारलोपः यदुक्तं सार्वधातुकसंज्ञाया अपवाद इति तद्विघटयति । ननु चेति । सत्यमित्यादिनापवादत्वं समर्थयते ।।

१—पाठ शुद्ध है ।
२—पुस्तक दिल्ली से टाइप कराई हुई है ।

—:o:—

क्रमसंख्या १३

## पद्मञ्जरी ।

हरदत्तविरचित ।

ऊपर लिखित क्रमसंख्या १२ का ही दूसरी प्रतिलिपि ।

—:o:—



क्रमसंख्या १४

## पद्मञ्जरी ।

हरदत्तविरचित ।

ऊपर लिखित क्रमसंख्या १२ की ही तीसरी प्रतिलिपि ।

—:o:—

क्रमसंख्या १५

## पद्मञ्जरी ।

हरदत्तविरचित ।

ऊपर लिखित क्रमसंख्या १२ का "जीवति तु वंश्ये युवा ।४।१।१६३।। से लेकर चतुर्थाध्याय की समाप्ति पर्यन्त भाग ।

—:o:

क्रमसंख्या १६

## पद्मञ्जरी ।

हरदत्तविरचित ।

क्रमसंख्या १२ का "ङ्याप् प्रातिपदिकात् ।४।१।१।।" से "जीवति तु वंश्ये युवा ४।१।१६३ ।।" पर्यन्त भाग ।

—:o:—

क्रमसंख्या १७

## पद्मञ्जरी ।

हरदत्तविरचिता ।

क्रमसंख्या १३ का "ङ्याप् प्रातिपदिकात् ४।१।१।।" से लेकर चतुर्थाध्याय की समाप्ति पर्यन्त भाग ।

—:o:—

क्रमसंख्या १८

## पदमञ्जरी ।

हरदत्तविरचिता ।

क्रमसंख्या १४ का "ङ्याप् प्रातिपादिकात् ४।१।१।।" से लेकर चतुर्थध्याय की समाप्ति पर्यन्त भाग ।

—:O:—

क्रमसंख्या १९

## पदमञ्जरी ।

हरदत्तविरचिता ।

व्याकरण । दे० ना० लिपि । पत्रसंख्या ७१ ।

पत्र-प्रमाण २०.४×१६.७ सैं०मी० ।

पंक्तियाँ १६ प्रतिपृष्ठ । अक्षर १५ प्रतिपंक्ति ।

पाठसंख्या ६३९ । अपूर्ण ।

प्राक्क्रीताच्छः ।५।१।१।। सूत्र से ब्रह्मणस्त्वः । ५।१।१३६।। सूत्र तक पञ्चमाध्याय का प्रथम पाद मात्र ।

मैसूर इंस्टिच्यूट लाईब्रेरी, मैसूर के एक ह० लि० की प्रतिलिपि (हस्तलिखित) ।

—:O:—

क्रमसंख्या २०

## पदमञ्जरी ।

हरदत्तविरचिता ।

षष्ठाध्याय के प्रथमपाद के प्रथम सूत्र "एका चो द्वे प्रथमस्य" ।६।१।१।। से लेकर षष्ठाध्याय तृतीयपाद के ६।३।३४।। सूत्र "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी· प्रियादिषु ।।" पर्यन्त ।



मैसूर इंस्टिच्यूट लाईब्रेरी, मैसूर के एक ह०लि की प्रतिलिपि (हस्तलिखित) ।

—:O:—

क्रमसंख्या २१

## पदमञ्जरी ।

हरदत्तविरचिता ।

"युवोरनाकौ" सूत्र से "ई च गणः" सूत्र तक सम्पूर्ण सप्तमाध्याय) ।

मैसूर इंस्टिच्यूट लाईब्रेरी, मैसूर के एक ह०लि० की प्रतिलिपि (हस्तलिखित)

—:O:—

क्रमसंख्या २२

## पदमञ्जरी ।

हरदत्तविरचिता ।

व्याकरण । दे०ना० लिपि । पत्रसंख्या १५३

पत्र-प्रमाण ३४.५×२१.७ सैं० मी० ।

पंक्तियां ३५ प्रतिपृष्ठ । अक्षर ३२ प्रतिपंक्ति ।

पाठसंख्या ५३५५ । अपूर्ण ।

षष्ठाध्याय प्रथमपाद मात्र ।

ओरियण्टल इंस्टिच्यूट, बड़ौदा के एक हस्तलिखित को प्रतिलिपि (हस्तलिखित) ।

—:O:—

क्रमसंख्या २३

## पदमञ्जरी ।

हरदत्तविरचिता ।

व्याकरण । दे०ना० लिपि । पत्र संख्या ४०५ ।

पत्र-प्रमाण ३३.८×१६.७ सैं०मी० ।
पंक्तियां २० प्रतिपृष्ठ । अक्षर ४४ प्रतिपंक्ति ।
पाठसंख्या ३५४४ । अपूर्ण ।

## प्रारम्भ :–

अविघ्नमस्तु हरिः ॐ ॥ प्रत्ययः ।

इह यदि सर्वान् नेव संज्ञिन स्वं रूपेण निर्दिस्य संज्ञा विधीयेत सन् प्रत्ययः क्यङ् प्रत्ययः क्यच् प्रत्ययः इति ततो गौरवं स्यात् ।

## समाप्ति :–

न च हिस्वौ लोटो भवतः इत्युच्यते चेदंलोटो हिस्वाविति ततश्च धर्मातिदेशो विज्ञायते तदाह लोट् धर्मो णौ तौ भवत इत्यर्थ इति अत्र च लोट्च्छब्देन लोट्सम्बन्धिनौ हिस्वावुच्येते मुख्यलोट्सम्बन्धिनो धर्मस्याति-देशासम्भवात् प्रसिद्धस्य लोटः सम्बन्धिनौ यौ हिस्वौ से—

१. लिखाई में अशुद्धियां बहुत हैं ।
२. विश्वेश्वरानन्द वैदिक संशोध संस्थान, साधुआश्रम, होशियारपुर के एक मलयालम हस्तलिखित की प्रतिलिपि है ।
३. तृतीयाध्याय के प्रारम्भ से लेकर तृतीयाध्याय तृतीयपाद की समाप्ति पर्यन्त । परन्तु "लिङ् यदि" ।३।३।१६८।। की व्याख्या से ले कर पादसमाप्ति पर्यन्त व्याख्या नहीं है । उसके स्थान पर ३।४।२।। की व्याख्या लिखी है ।

—:o:—

क्रमसंख्या २४

## पदमञ्जरी ।

हरदत्तविरचिता ।
व्याकरण । दे०ना० लिपि । पत्रसंख्या ४३४ ।
पत्र-प्रमाण ३३.८×१६.७ सैं०मी० ।
पंक्तियां २० प्रतिपृष्ठ । अक्षर १३ प्रतिपंक्ति ।
पाठसंख्या ३५२६ । अपूर्ण ।



१. ऊपर वाले क्रमसंख्या २३ ग्रन्थ का अगला भाग है ।
२. जहाँ क्र०सं० २३ का पाठ समाप्त हुआ है, उससे आगे ही इसका पाठ प्रारम्भ होता है । परन्तु समाप्ति वाले पृष्ठ पर 'धातोः कर्मणः समानकर्तृकादिच्छायां वा ।३।१।७।। के वार्त्तिक "आशङ्का-यामुपसँख्यानम् ।" की व्याख्या—"अशङ्का सम्भावना प्रयोक्तृधर्मं तद्विशिष्टक्रियावचनात्—स्वार्थे प्रत्ययः कूलं पिपतिषतीति कुलस्या चेतन…" लिखी मिलती है ।
३. पाठ अनेक स्थानों पर टूटा हुआ भी है और अशुद्ध भो है ।

—:o:—

क्रमसंख्या २५

## ईशावास्योपनिषद्भाष्यम् ।

श्रीशङ्कराचार्यविरचितम् । आनन्दगिरिटिप्पणसहितम् ।
उपनिषद् । दे० ना० लिपि । पत्र-संख्या १४ ।
पत्र-प्रमाण ३२.३×१६.५ सैं०मी० ।
पंक्तियां १४ प्रतिपृष्ठ । अक्षर ४४ प्रति पंक्ति ।
पाठसंख्या २६९ । सम्पूर्णम् ।

## भाष्यारम्भ :—

ॐश्रीगणेशाय नमः ईशावास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्ता-स्तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात् याथात्म्यं चात्मनः

## टिप्पणारम्भ :—

ॐस्वस्ति श्रीगणेशाय नमः

येनात्मना परेणेशा व्याप्तं विश्वमशेषतः ।
सोहन्देहद्वयोः साक्षी वर्जितो देहतद्गुणैः ॥१॥

ईशावास्यमित्यादिमन्त्रान् व्याचिख्यासुर्भगवान् भाष्यकारस्तेषाङ्क-र्मशेषत्वशङ्कान्तावद्व्युदस्यति । तथा हि – कर्म्मजडाः केचन मन्यन्ते ईशावा-स्यमित्यादयो मन्त्राः कर्म्मशेषाः मन्त्रत्वाविशेषात् इषेत्वेत्यादि मन्त्रवत्ततः

पृथक् प्रयोजनाभावादव्याख्येया इति । तान् प्रत्याह ईशावास्यमित्यादय इति ।

## भाष्यसमाप्ति :—

अमृतमश्नुत इति । आपेक्षिकममृतं विद्याशब्देनात्मविद्याग्रहणे हिरण्मयेत्यादिना द्वारमार्गादियाचनमनुपपन्नं स्यात् तस्माद्यथास्माभिर्व्याख्यात एवं मन्त्राणामर्थं इति उपरम्यते । इति श्रीमच्छाङ्कराचार्य्यभगवत्पादकृतमीशावास्यभाष्यं समाप्तम् ।

## टिप्पणसमाप्ति :—

अतो मुख्यार्थबाधात् गौणार्थग्रहणं युक्तमित्यर्थः । यस्मादर्थान्तरं न संगच्छते तस्मादित्युपसंहारः ।

ईशाप्रभृतिभाष्यस्य शांकरस्य[1] परात्मनः[2] ।
मन्दोपकृतिसिद्धयर्थं प्रणीतं टिप्पणं स्फुटम् ।।१।।

इति श्री ईशावास्यभाष्यटिप्पणं समाप्तम् आनन्दगिरिकृतम् ।

शुभम्

१. पाठ प्रायः शुद्ध है ।
२. कठिन शब्दों का अर्थ स्पष्ट करने के लिए पाठक ने यत्र तत्र संक्षिप्त टिप्पणियां भी लिख रक्खी हैं ।
३. पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या २६

## उपवीतकरणपद्धतिः ।

रचियता अज्ञात ।
कर्मकाण्ड । दे० ना० लिपि । पत्रसंख्या २
पत्र-प्रमाण २५.६×११.४ सैं०मी० ।
पंक्तियां ६ प्रति पृष्ठ । अक्षर ३१ प्रतिपंक्ति ।
पाठसंख्या २६ । सम्पूर्ण ।

टि० १—शंकरकृतस्य । २—परमात्मनिरूपणप्रधानस्य ।



## प्रारम्भ :—

अथोपवीतकरण पद्धतिः ।

नत्वैकं वक्रतुण्डं सुरनरमुनिभिः पूज्यमर्थप्रदं वै
दृष्ट्वा वेदोपयुक्तान् द्विजकरनिखिलब्रह्मसूत्रोपकारान् !
ग्रन्थानाकृष्य तेभ्यो मनुविधिसहितं सर्वविप्रोपकारम्
वक्ष्येहं सद्धिताय प्रकटितसकलब्रह्मसूत्रोपकारान् ।।१।।
तावत्सूत्रप्रकारशुद्धिमाह यजुर्विधाने देवलः ।

## समाप्ति :—

ततः परिधानमन्त्रो गोभिलस्मृतौ—यज्ञोपवीतमितिप्रजापतिर्ऋषिर्यजुरुपवीतं देवता यज्ञोपवीतपरिधाने विनियोगः ॐ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि इत्यनेन दक्षिणं बाहुमुद्धृत्य वामांसे सन्निधापनम् । आचम्य विधिवत्पश्चादेष एव विधिः स्मृतः । इति संक्षेपतो ब्रह्मसूत्रक्रिया समाप्ता ।। शुभम् ।।

१. लिखाई में अशुद्धियां नहीं हैं ।
२. पुस्तक अच्छी दशा में है ।

—:o:—

क्रमसंख्या २७

## कादम्बरी ।

बाणभट्टविरचिता ।
गद्यकाव्य । दे० ना० लिपि । पत्रसंख्या २३८ ।
पत्र-प्रमाण ३१.१×११.७ सैं०मी० ।
पंक्तियां ८ प्रतिपृष्ठ । अक्षर ६० प्रति पंक्ति ।
पाठसंख्या ७१४० । पूर्ण ।

## प्रारम्भ :—

श्री गणेशाय नमः ।

रजोजुष जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ।।१।।
आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन
इवापरश्चतुरुदधिमालामेखलाया भुवो भर्त्ता··· ······ ।।

## समाप्ति :–

तया सह जन्मद्वयाकांक्षयैवापरिसामान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमाः कादम्बर्या सह कादम्बरी महाश्वेतया सह महाश्वेता पुंडरीकेण सह पुंडरीकोपि…… ……परं परस्पराबियोगेन सर्वं एव सर्वकालं सुखान्यनुभवन्तः परां कोटिमानन्दस्याधिगच्छन् ।। श्री ।। इति श्रीबाणभट्टविरचितायां कादम्बरीकथायां तत्सूनुविरचितः शेषः समाप्तः ।। शुभमस्तु ।। संवत् १६६४ समय अगहन सु तृतीया श्रीरस्तु

१. लिखाई की अशुद्धियों को बड़े प्रयत्न से शुद्ध किया गया है।
२. प्रारम्भ में मङ्गलाचरण के रूप में केवल एक ही पद्य है। उससे आगे कादम्बरी गद्य प्रारम्भ हो जाता है। इसी प्रकार उत्तरार्द्ध के प्रारम्भ में कोई पद्य नहीं है। "श्री गणेशाय नमः" लिख कर ही कथा का आरम्भ "अथेदानीमानोतस्यापि कुमारस्य न ददाति ··" इत्यादि लिखना प्रारम्भ कर दिया है। परन्तु इस उत्तरार्द्ध के आरम्भ में दूसरी कलम से आठ पद्य मङ्गलाचरण के लिखे गए हैं।
३. पुस्तक अच्छी अवस्था में है।

-- :o:—

क्रमसंख्या २८

## महाभाष्य प्रदीप ।

कैयट विरचित ।
व्याकरण । दे० ना० लिपि । पत्रसंख्या १४५ ।
पत्र-प्रमाण ३०.५ × १४.४ सैं०मी० ।
पंक्तियां १४ प्रति पृष्ठ । अक्षर ४१ प्रतिपंक्ति ।
पाठसंख्या ५२०० । अपूर्ण । प्रथमाध्याय के द्वितीय पाद की समाप्ति पर्यन्त ।

## प्रारम्भ :–

ॐ श्री गणेशाय नमः ।

सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् ।
सदसद्रूपतातीतमदृश्यं माययावृतैः ।।१।।



ज्ञानलोचनसंलक्ष्यं नारायणमजं विभुम् ।
प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ।।२।।
पुरुषाः प्रतिद्यन्ते देवत्वं यदनुग्रहात् ।
सरस्वतीं च तां नत्वा सर्वविद्याधिदेवताम् ।।३।।
पदवाक्यप्रमाणानां पारं यातस्य धीमतः ।
गुरोर्महेश्वरस्यापि कृत्वा चरणवन्दनम् ।।४।।
महाभाष्यार्णवावारपारीणं विवृतिप्लवम् ।
यथागमं विधास्येहं कैयटो जैयटात्मजः ।।५।।
भाष्याब्धिः क्वाति गम्भीरः क्वाहं मन्दमतिस्ततः ।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ।।६।।
तथापि हरिवद्धेन सारेण ग्रन्थसेतुना ।
क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत् ।।७।।

भाष्यकारो विवरणाकारत्वाद् व्याकरणस्य साक्षात्प्रयोजनमाह—अथ शब्दानुशासनमिति ।

## समाप्ति :–

ग्राम्यस्त्रीपुंसात्मकस्य संघस्य स्त्रीशब्देनाभिधानं यथा स्यादिति सूत्रारम्भः उभयात्मकत्वमक्षाम्यन्नाह अयमिति स्त्रिय एवेति यद्यपि तत्र वृषभस्यापि सम्भवः तथापि मल्लग्रामवत् भूयस्त्वात् स्त्रीभिर्व्यपदेशो भवति अग्राम्यादिषु तु मिश्रत्वात् संघस्य पुमान् स्त्रियेति पुंसः अनेकशफेष्विति उष्ट्राणां त्वारण्यकत्वात् स्त्रीशेषाभावः तत्रानेन प्रकरणेन प्रयोगस्य नियतत्वाज्जातिः क्वचिदाश्रयलिङ्गेन स्त्रीत्वेन व्यपदिश्यते क्वचित्पुंस्त्वेनेत्युक्तं भवति । इति श्रीउपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम् पादश्च समाप्तः ।।

१. लिखाई शुद्ध है।
२. चार पांच स्थानों पर बहुत संक्षिप्त व्याख्यात्मक टिप्पणियां भी हैं।
३. पुस्तक अच्छी अवस्था में है।

—:o:--

क्रमसंख्या २६

## तत्वानुसन्धानम् ।

महादेव सरस्वती विरचितम् ।
वेदान्त । देवनागरी लिपि । पत्र संख्या २६ ।
पत्र-प्रमाण २८.५ × १२.४ सें० मी० ।
पंक्तियां १२ प्रतिपत्र । अक्षर ४० प्रतिपंक्ति ।
पाठसंख्या ७८० ।

### प्रारम्भ :–

श्रीकृष्णाय नमः । अथ तत्त्वानुसन्धानं लिख्यते सच्चिदानन्दो जयति ।

ब्रह्माहं यत्प्रसादेन मयि विश्वं प्रकल्पितम् ।
श्रीमत्स्वयंप्रकाशाख्यं प्रणौमि जगतां गुरुम् ॥१॥
देहो नाहं श्रोत्रवागादिकानि
नाहं बुद्धिर्नाहमध्यासमूलम्
नाहं सत्यानन्दरूपश्चिदात्मा
माया साक्षी कृष्ण एवाहमस्मि ॥ २ ॥

अथ मोक्षस्य वाक्यार्थज्ञानाधीनत्वात्तस्य च पदार्थज्ञानाधीनत्वा त्तदर्थं तत्पदार्थं निरूपयामः तत्पदार्थस्य लक्षणं द्विविधं तटस्थलक्षणं स्वरूपलक्षणं चेति ।

### समाप्ति :–

तस्मादहं ब्रह्मास्मीति तत्त्वमस्यादिवाक्यजन्य ज्ञानाद्ब्रह्मभावलक्षणो भवतीति न स पुनरावर्त्तते तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः इत्यादि श्रुतिस्मृतिभ्यः

श्रीमत्स्वयंप्रकाशास्मद्गुरुणा करुणावशात् ।
उपदिष्टं परात्मैक्यतत्त्वमावेदितं मया ॥ १ ॥
ब्रह्मेशविष्ण्वादिसमस्तदेवाः
स्वस्वाधिकारेषु विभीतिचित्ताः
(विभान्ति चित्राः इत्यपि पाठः)



आज्ञा वशाद्यस्य वसन्ति सर्व्व
तं कृष्णमाद्यं शरणं प्रपद्ये ॥ २ ॥

या भारती शिवविरंचिविष्णु
देवादिभिर्नित्यमुपास्यमाना ।
सदाक्षमालाविलसत्कराढ्यां
वाग्वादिनीं तां प्रणमामि देवीम् ॥ २ ॥

आकाशपुष्पमिव विश्वमहं निरीक्ष्ये
मग्नोस्मि नित्यसुखबोधरसामृताब्धौ ॥
प्रत्यञ्चमद्वयमनन्तसुखैकबोधं
साक्षात्करोमि पदभावनया गुरूणाम् ॥ ४ ॥

यत्पादयुग्मकमलाश्रयणं विनाहं
संसारसिन्धुपतितः सुखदुःखभाक्स्याम् ।
यत्पादपद्मकमलाश्रयणात्सुतीर्ण
स्तद्देशिकाङ्घ्रिकमलं प्रणतोऽस्मि नित्यम् ॥५॥

परमसुखपयोधौमग्नचित्तो महेशं
हरिविधिसुरमुख्यान्देशिकं देशमात्रम् ।
जगदपि न विजाने पूर्णसत्यात्मसंवित्–
सुखतनुरहमात्मा सर्वसंसारशून्यः ॥६॥

यदुकुलवररत्नं कृष्णमन्यांश्च देवान्
मनुजपशुमृगादीन्ब्राह्मणादीन्न जाने ।
परमसुखसमुद्रे मज्जनात्तन्मयोऽहं
गलितनिखिलभेदः सत्यबोधैकरूपः ॥७॥

इति श्रीपरमंहसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वती पूज्यपादशिष्यभगवन्महादेवसरस्वतीमुनिविरचितं तत्त्वानुसन्धानं समाप्तम् ।

१. लिखाई शुद्ध है ।
२. अनेक स्थानों पर व्याख्यात्मक टिप्पणियां भी पत्र के किनारों पर लिखी गई हैं ।
३. पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ३०

## जैमिनीयाश्वमेधः ।

द्वैपायनव्यासविरचितः ।

इतिहास । दे० ना० लिपि । पत्रसंख्या १७ ।

पत्र–प्रमाण २९.१×१२.३ सैं० मी० ।

पंक्तियां १४ प्रतिपृष्ठ । अक्षर ४७ प्रतिपंक्ति ।

पाठसंख्या ७०५ । अपूर्ण ।

### प्रारम्भ :–

श्रीगणेशायनमः । जनमेजय उवाच--

कथं युधिष्ठिरः प्रीतो मम पूर्वपितामहः ।
हयमेधं क्रतुवरं चक्रे बन्धुभिरन्वितः ॥

जैमिनिरुबाच—

शृणु राजन् प्रवक्ष्यामि धर्मराजस्य चेष्टितम् ।
दिवं पितामहे याते धर्मपुत्रोऽतिदुःखितः ।
यदृच्छया च सम्प्राप्तं व्यासं पप्रच्छ सादरम् ॥
केनोपायेन मे ब्रह्मन्गोत्रबध्याकृतं भयम् ।
ध्रुवं विनाशं प्राप्नोति तन्मे ब्रूहि तपोधन ॥

### समाप्ति :–

श्रीकृष्ण उवाच –

उत्थापयाशु भीमैनां वसुदेवं विलोकय ।
संप्राप्तं ददृशे भीमः समुत्थाप्य हि सूतिकाम् ॥
वसुदेवं नमस्कृत्य कृष्णभीमौ महामती ।
वद्धाञ्जलिपुटावग्रे प्रोचतुर्वचनं शुभम् ॥
गच्छामो धर्मराजानं त्वयाऽऽशप्ताः परंतप ।

वसुदेव उवाच—

गच्छ-गच्छ हृषीकेश मां परित्यज्य संगरे ।
नीयते देवकी धन्या या प्रसूता हरिं भुवि ॥



पुनरागमनं तेऽस्तु कुरु वाक्यं ममाच्युत ।
धनं तेभ्यः प्रदातव्यं ब्राह्मणेभ्यो यथासुखम् ॥
ये वेदपाठकाः सर्वे शास्त्रं विन्दन्ति तत्त्वतः ।
परापवादिनो नैव शिष्टाचारपरायणाः ॥
नेतव्या सहिता······ ··

१. आश्वमेधिक पर्व के पहले १० अध्याय पूर्ण हैं तथा ११वें अध्याय के १८ श्लोक हैं। इससे आगे का भाग नहीं है।
२. लिखाई प्रायः शुद्ध है। परन्तु श्लोकसंख्या नहीं लगाई है।
३. पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ३१

## अङ्गिरास्तोत्रम् ।

रचयिता अज्ञात ।

मन्त्रशास्त्र । दे० ना० लिपि । पत्र संख्या ७ ।

पत्र–प्रमाण १९.६×१२.२ सैं० मी० ।

पंक्तियां १३ प्रतिपृष्ठ । अक्षर ११ प्रतिपंक्ति ।

पाठसंख्या ५२ । अपूर्ण ।

### प्रारम्भ :–

श्री गणेशाय नमः । ॐ ह्रीं यां कल्पयन्ति नो रथः । क्रूरां कृत्यां वधूमिव तां ब्रह्मणाभिनिर्णुमः । प्रत्यक्कर्त्तारमृच्छतु । ॐ ह्रीं प्रत्यङ्गिरा-मन्त्रस्य अस्य श्रीब्रह्मा ऋषिरनुष्टुप् छन्दः । श्रीप्रत्यङ्गिरा देवता । ॐ बीजम् । ह्रीं शक्तिः । इष्टार्थे जपे विनियोगः ।

### समाप्ति :–

मृतवत्सा च या नारी या च गर्भं न मुञ्चति ।
बालो रोदति यस्याश्च स्तन्यं वा न पिबेत् क्वचित् ॥
सर्वासु ग्रहबाधासु गुग्गुलं सप्तमन्त्रितम् ।
विधाय धूपयेत्तेन सर्वा बाधा प्रशाम्यति ॥

युद्धादौ मन्त्रयेच्छस्त्रं तेनासौ विजयी भवेत् ।
अनिष्टशान्तये तोयमष्टधाराभिमन्त्रितम् ।
प्राशयेदभिषिञ्चेद्वा यमसौ नीरुजो भवेत् ॥
इति श्रीप्रत्यङ्गिरा शताक्षरी सहस्राक्षरी स्तोत्रसमाप्तिः ॥

१. लिखाई में अनेक स्थानों पर अशुद्धियां हैं।

२. इसमें प्रत्यङ्गिरा के तीन मन्त्र हैं। पहला चौतीस अक्षर का है, दूसरा एक सौ बाईस अक्षर का और तीसरा सम्भवतः एक सहस्र अक्षर का है। परन्तु बीच में पांचवां पत्र न होने से वह अधूरा रह गया है।

—:o:—

क्रमसंख्या ३२

## प्रौढ़मनोरमा।

भट्टोजिदीक्षितविरचिता।
व्याकरण। दे० ना० लिपि। पत्र संख्या १७७।
पत्र-प्रमाण ३०.६×१४.७ सैं० मी०।
पंक्तियां १२ प्रतिपृष्ठ। अक्षर ४० प्रतिपंक्ति।
पाठसंख्या ५३००। अपूर्ण।

### प्रारम्भ :-

ॐ स्वस्ति श्रीगणेशाय नमः। अथ मध्ये कृतं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नाति श्रौत्रेति हायनान्तयुवादिभ्योणिति सूत्रे श्रोत्रियस्य यलोपश्चेति वार्त्तिकाच्छ्रौत्रं श्रोत्रियत्वम् आर्हंती योग्यता गुणवचनब्राह्मणादिभ्यः कर्मणि चेति सूत्रे अर्हतो नुम्चेत्युक्तेः ताभ्यां वित्तैः किञ्च गुण्यैर्गुणवद्भिः रूपादाहतप्रशंसयोर्यबिति सूत्रे अन्येभ्योपि दृश्यत इत्युक्त्वा गुण्या ब्राह्मणा इत्यस्य भाष्यादावुदाहृतत्वात्।

### समाप्ति :-

परिग्रहेत्वनार्षान्तात्तेन चैकाक्षरीकृतात्।
परेषां न्यासमाचारं वालिस्तौचेत्स्वरौ परौ ॥



इतिवचना। इत्थमन्यत्रापि मुनित्रयवचांसि तत्तत्प्रातिशाख्यानि तद्व्याख्यातृगिरो निरुक्तादि ग्रन्थांश्च पर्यालोच्य तत्त्वं निर्णेयम्। तदाह यथाशास्त्रमुन्नेयमिति।

अखण्डमपि यत्सर्वं कृत्तद्धितपरं परम्।
अशेषशास्त्रसंवेद्यमक्षरं तदुपास्महे ॥ १ ॥
सिद्धान्तकौमुदी व्याख्या सेयं प्रौढमनोरमा।
भट्टोजिदीक्षितकृतिर्भूयाद्विश्वेशतुष्टये ॥ २ ॥

इति पदवाक्यप्रमाणज्ञश्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां प्रौढमनोरमायामुत्तरार्द्धं समाप्तम् ॥

१. उत्तरार्द्ध भाग का प्रारम्भ लकारार्थ प्रक्रिया के "धातु सम्बन्धे प्रत्ययाः" ॥ ३। ४। १॥ तक ठीक चलता है। उस से आगे एक पत्र नष्ट हो गया है। फिर लकारार्थ प्रक्रिया का शेष भाग है और उससे आगे कृदन्त के "धातोः" ३। १। ९१॥ सूत्र से ले कर समाप्ति पर्यन्त सारा ग्रन्थ है। वैसे वैदिक स्वर प्रकरण (मनोरमा का) क्रमाङ्क ५२५९६ में देखा जा सकता है।

२. पाठ प्रायः शुद्ध है।

३ पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ३३

## वाल्मीकीयम्; योगवशिष्ठस्य वैराग्यप्रकरणम् (सटीकम्)।

बाल्मीकिविरचितम्।
टीकाकारः श्रीमदानन्दबोधेन्द्र यतिः।
वेदान्त। दे० ना० लिपि। पत्र संख्या १०३।
पत्र-प्रमाण ३३.००×१६.५ सैं० मी०।
पंक्तियां १३ प्रतिपृष्ठ। अक्षर ४९ प्रति पंक्ति।
पाठसंख्या ४१००। पूर्ण।

## प्रारम्भ :—

(टी०) श्रीगणेशायनमः। श्री सरस्वत्यै नमः। श्री गुरुभ्यो नमः श्री दक्षिणामूर्त्तये नमः। ॐ नमो ब्रह्मणे ब्रह्मविद्भ्यो ब्रह्मविद्यासम्प्रदाय-कर्त्तृभ्यो वशिष्ठविश्वामित्रव्यासबाल्मीकिशुकादिभ्यः श्रीरामचन्द्राय च ॥ ॐ नमः कृष्णाय ॥ श्रीः ॐ।

अजमजरमनाद्यनन्तमन्त
निजसुखबोधसदद्वितीयपूर्णम्।
शिवमखिलहृदि स्फुरत्समाया
विकसितविश्वविलासमानताः स्मः ॥१॥ ॐ ॥

स्मृतिफलितसमस्ताभीष्टमुद्यद्दिनेश
प्रतिभटनिजशोभाशान्तविघ्नान्धकारम्।
कमपिशिवभवान्योरङ्कसौभाग्यमन्तः—
सुरमणिमवलम्बे चारुलम्बोदराख्यम् ॥२॥

मुग्धस्मिताञ्चितमनोज्ञमुखेन्दुबिम्ब
स्निग्धामृतप्रतिमचारुकृपाकटाक्षम्।
अग्रेसरैरनुसृतं मुनिभिर्मुनीनां
न्यग्रोधमूलवसतिं गुरुमाश्रयामः ॥३॥

त्रिभुवनावनकृत्यकृतोदयः
सदभयामलबोधसुखोदयः।
सुजनहृद्गिरिगह्वरकेसरी
शरणमस्तु सदा नरकेशरी ॥४॥

दक्षे वराक्षवलयावभयं च वामे
या पुस्तकञ्च दधती विधिनेत्रपेया।
सा शारदाब्जनयना शरदिन्दुशोभा
भासा स्वया हरतु मे हृदयान्धकारम् ॥५॥

ये नेत्राणि हरस्य यैर्ज्जगदिदं प्रद्योतितञ्चेष्टते
यत्रैवापतितः श्रुतिस्मृतिनुतो धर्मः सशर्म्मोदयः।
ये कालं कलयन्ति ये च परमस्वज्योतिरात्मोपमाः
ते सूर्येन्द्वनिला भवन्तु हृदि मे बोधाब्जिनीभानवः ॥६॥



वक्त्रेन्दुभिर्दिक्षुतमोहरद्भिः
वेदार्थसारामृतमुद्गिरन्तम्।
वाणीभुजाश्लिष्टमभीष्टसिद्ध्यै
तम्ब्रह्मविद्यादिगुरुम्प्रपद्ये ॥७॥

यद्वाक्यामृतपायिनाम्प्रतिपदं सत्यं सुधा नीरसा
यद्वाक्यार्थविचारणादभिमतः स्वर्गोपि कारागृहम्।
यद्वाणी विशदात्मपूर्णमनसान्तुच्छं जगत्तूलवत्
तस्मै श्रीगुरवे वशिष्ठमुनये नित्यं नमस्कुर्महे ॥८॥

यस्यार्षम्प्रथिता जगत्त्रयहिता सा वेदमाता परा
यश्चक्रे तपसा वशे सुरगणानन्यान् सिसृक्षुर्जगत्।
तम्बोधाम्बुनिधिन्तपस्विमुकुटालङ्कारचिन्तामणिं
विश्वामित्रमुनिं शरण्यमनघम्भूयो नमस्याम्यहम् ॥९॥

श्रुत्या ब्रह्मेव रामः प्रकटितमहिमा येन तस्मै वशिष्ठो
यः सीताम्ब्रह्मविद्यामिव सदसि पुनः सत्यशुद्धांकिलादात्।
यद्वाणी मोहमूलं शमयति जगदानन्दसन्दोहदोग्ध्री
तस्मै बाल्मीकये श्रीगुरुतमगुरवे भूरिभावैर्नताःस्मः ॥१०॥

पूर्णानन्दस्वभावः स्वजनहितकृते माययोपात्तकायः
कारुण्यादु···धीर्षुर्जनमनवरतं मोहपङ्के निमग्नम्।
आविश्यान्तर्व्वशिष्ठं बहिरपिकलयन् शिष्यभावंवितेने
यः संवादेन शास्त्रामृतजलधिममुं रामचन्द्रम्प्रपद्ये ॥११॥

विद्याभिः सह विश्रुता श्रितवती येषां मुखं भारती
सत्त्वोत्कर्षसमाधिभिः स्थिरमहो तद्ब्रह्म येषां हृदि।
पादाम्भोरुहमाश्रिताश्च सततं तीर्थैस्समं सम्पदः
श्रीसर्व्वज्ञसरस्वतीति विदितान् श्रीमद्गुरूँस्तान्भजे ॥१२॥

श्रीः संश्रितैव चरणौ हृदयं च राम-
श्चन्द्रोमुखं गुणभरेण सरस्वती च।
येषां सतस्तदभिधाङ्कितनामधेयान्
श्रीमद्गुरून गुरुतरान्प्रणतौस्मि नित्यम् ॥१३॥

तापघ्वस्तिव्यापृतकारुण्यकटाक्ष
व्याख्यावाणीनिर्वृतसर्व्वाङ्घ्रिशरण्यान् ।
श्रीमद्रामानन्दमुनीनद्भुतचर्य्यान्
आर्य्यान्नित्यन्देशिकवर्य्यान्प्रणतोस्मि ॥१४॥

विश्वेशोपि हरिश्शरण्यचरणो यान् मानयन्सौहृदाच्
छान्तान्नित्यमनुव्रजामि रजसा पूयेय चेत्यब्रवीत् ।
यत्पूजांविदधेश्रुतिर्मतिमतां सर्वेष्टसिद्ध्यै तदा
जीवन्मुक्तसुखात्मपूर्णमनसस्तान्ब्रह्मनिष्ठान्भजे ॥१५॥

कृतिभिरसुकराः क्व नु प्रबन्धाः
क्व च तव बालिशबुद्धिरेष जन्तुः ।
तदपि विरचनेत्र सद्गुरूणां
सदयनिरीक्षणमेव मेऽवलम्बः ॥१६॥

अशेषविद्याम्बुधिपारगाणा
मपास्तरागादिमनोमलानाम् ।
कृपानिधीनां कृतिनां ममास्मिन्
सताम्पदाब्जस्मरणं सहायः ॥१७॥

यत्कृपालेशमात्रेण तीर्णोऽस्मि भवसागरम् ।
श्रीमद्गङ्गाधरेन्द्राख्यान् श्रीगुरूँस्तान्भजामहे ॥१८॥

आनन्दबोधयतिनाश्रीमद्गुरुवचोमृतैः ।
वाशिष्ठार्थप्रकाशोऽयं यथामति वितन्यते ॥१९॥

प्रशंसन्तु स्वैरं मतिभिरथ निन्दन्तु सुधियः
प्रवृत्तिर्मे यस्मान्न भवति जनाराधनकृते ।
अनेन व्याजेनामृतरसवशिष्ठोक्तिभरिते
विहर्त्तुं वाञ्छामि प्रतिदिवसमानन्दजलधौ ॥२०॥

यथामति बुभुत्सुभ्यः साहाय्यं सङ्कटेष्विव ।
दुरूहश्लोकभावेषु दर्शयिष्ये परिश्रमम् ॥२१॥

स्थितमेकरसे युक्त्या नानारसविजृम्भणम्
वाशिष्ठं रोचयत्वेतत्सुभोज्यं सङ्कटेष्विव ॥२२॥



अप्यल्पमतिदुर्बोधं स्फुटं व्याख्यास्यते पदम् ।
द्विस्त्रिर्व्याख्यातपूर्वं तु दुरूहमपि बोध्यते ॥२३॥

अनन्यपूर्वव्याख्यातं ग्रन्थं मे व्याचिकीर्षतः ।
सन्तः श्रमज्ञाः कृपया क्षमध्वं स्खलितं क्वचित् ॥२४॥

अथ जगदिदमनादिमहामोहनिशासुप्तमनवरतदुःस्वप्नभ्रमपरम्परा-कल्पिते जन्मजरामयमरणहर्षामर्षशोकाद्यनर्थसङ्कटसहस्रसकुङ्ले ग्रहा-तिग्रहव्याघ्रभीषणे तापत्रितयदावानलज्वालाकुलषडूर्म्मिजालेऽरि-षड्वर्गव्याधवध्यमानप्राणिनिकाये संसारमहारण्ये मुह्यमानं विवेकान्ध-म्प्रबोधोपायदौर्ल्लभ्याद्विषीदत्समुदीक्ष्य शास्त्रभानूदयेन तत्प्रबोधनाय भगवतः पद्मजन्मनः शासनात् स्वतश्च प्रवर्त्तमानः परमकारुणिको भगवान् बाल्मीकिः प्रारिप्सितस्य महतः शास्त्रस्य निर्विघ्नग्रन्थपरि-समाप्तिप्रचयगमनादिसिद्धये वक्ष्यमाणश्रुतिस्मृतिसदाचारप्रापितं सर्व-विघ्नमूलोच्छेदक्षमं सच्चिदानन्दाद्वयप्रत्यगात्मपरब्रह्मप्रणतिलक्षणं मङ्गल-माचरन् अर्थाच्छास्त्रस्य विषयप्रयोजने तटस्थस्वरूपलक्षणाभ्यां संक्षिप्य दिदर्शयिषुः प्रथमं यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्युक्ततटस्थलक्षण-सिद्धसदद्वयस्वभावं तत्पदार्थं नमस्यति यत इति ।

**(मू०)** यतः सर्वाणि भूतानि प्रतिभान्ति स्थितानि च ।
यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः ॥१॥

## समाप्ति :-

**(मू०)** सकललोकचमत्कृतिकारिणोऽ—
प्यभिमतं यदि राघवचेतसः ।
फलति नो तदिमे वयमेव हि
स्फुटतरं मुनयो हतबुद्धयः ॥४६॥

इति श्रीमद्वाल्मीकिविरचिते महारामायणे देवदूतोक्ते द्वात्रिंशत्साह-स्रयां संहितायां मोक्षो पाये वैराग्यप्रकरणे नभश्चरसंचनं नाम त्रयस्त्रिं-शत्तमः सर्गः ॥३३॥ समाप्तं वैराग्य प्रकरणम् ॥

**(टी०)** राममनोरथसम्पत्तेरवश्यकर्त्तव्यतां तत्प्रशंसनेनोत्तमाधिकार-प्राप्तिख्यापानमुखेनोक्त्वा तदुपेक्षणे दोषमाहुः सकलेति । सकललोकानां

सर्व्वजनानां चमत्कृतिर्गुणशीलविनयादिभिः समुचितप्रष्टव्यरसस्योद्घाटनेन चानन्दस्तत्कारिणो राघवचेतसोप्यभिमततत्त्वजिज्ञासालक्षणो मनोरथो यदि नो फलति अस्मदाद्यभिज्ञोपदेशेनेति शेषः। नो इति नञ्पर्य्यायो निपातः। तर्त्ति हि हतबुद्धयो दुर्बुद्धयः। अभिज्ञता निष्फलैव स्यादिति भावः। तस्मादवश्यमुपदेष्टव्यमितिसिद्धम् ॥४६॥ इति श्री मत्परमहंसपरिव्राजकाचार्य्यश्रीमहेन्द्रेन्द्रसरस्वतीपूज्यपादशिष्यश्रीमद्गङ्गाधरेन्द्रसरस्वतीपूज्यपादशिष्य—श्रीमदानन्दबोधेन्द्रयत्याख्यभिक्षुणाविरचिते वाशिष्ठतात्पर्य्यप्रकाशे वैराग्यप्रकरणेत्रयस्त्रिशत्तमः सर्गः ॥ शुभम्भवतात् सं० १८८९ श्रा० शु० १३ ॥

१. लिखाई में अनेक स्थानों पर अशुद्धियां हैं।
२. जहां कोई पद्य या वाक्य समाप्त होने पर पंक्ति का कुछ भाग रिक्त रह जाता है वहां सभी जगह "श्रीरस्तु", "श्रीरामो जयतात्" "श्रोरस्तुतराम्" "अमितविक्रमः करोतु कल्याणम्' आदि आशीर्वादात्मक वाक्य लिखकर लेखक ने पक्ति को भर दिया है।
३. दन्त्योष्ठ्य वकार के स्थान पर बहुधा ओष्ठ्य बकार लिखा गया है।
४. टीका बहुत स्पष्ट एवं सरल है।
५. पुस्तक का काग़ज पुराना पड़ कर टूटने लगा है। तथापि पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ३४

## न्यायामृतम्।

व्यासयतिविरचितम्।
वेदान्त। दे० ना० लिपि। पत्र संख्या १९४--५।
पत्रप्रमाण २८.३×१२.१ सैं० मी०।
पंक्तियां १२ प्रतिपृष्ठ। अक्षर ५१ प्रतिपंक्ति।
पाठसंख्या ७२२९। अपूर्ण।



## प्रारम्भ :-

श्रीगणेशाय नमः श्रीगोपालाय नमः।

निखिलगुणनिकायं नित्यनिर्धूतहेयं
शुभतममतिमेयं शुद्धसौख्याप्त्युपायम्।
सकलनिगमगेयं सर्वशब्दाभिधेयं
नवजलधरकायं नौमि लक्ष्मीसहायम् ॥१॥

विघ्नौघवारणं सत्याशेषविश्वस्य कारणम्।
करुणासिन्धुमानन्दतीर्थबन्धुमहं भजे ॥२॥

अभ्रमं भंगरहितमजडं विमलं सदा।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥३॥

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥४॥

समुत्सार्यतमस्तोमं सन्मार्गं संप्रकाश्य च।
सदा विष्णुपदासक्तं सेवे ब्रह्मण्यभास्करम् ॥५॥

ज्ञानवैराग्यभक्त्यादिकल्याणगुणशालिनः।
लक्ष्मीनारायणयतीन्वन्दे विद्यागुरून्मम ॥६॥

श्रीमध्वशास्त्रदुग्धाब्धि धीमन्दरमहीभृता।
आमथ्योद्ध्रियते न्यायामृतं विबुधतृप्तये ॥७॥

विक्षिप्तसंग्रहात्क्वापि क्वाप्युक्तस्योपपादनात्।
अनुक्तकथनात्क्वापि सफलोयं श्रमो मम ॥८॥

ननु मिथ्यैव विश्वम्। तथा तत्र विप्रतिपत्तिः……

## समाप्ति :-

उक्तं च। ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जना इति। कथमन्यथा सदेहेष्वेव जयादिषु देहेन्द्रियासुहीनानामित्युक्तिः। तस्मात्फलाध्यायोक्तन्यायैस्तरतमभावापन्नमुक्तब्रह्मरुद्रादिनियामको भगवान् श्रीपतिः सर्वोत्तम इति सिद्धं मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम्।

नमोनिरस्तदोषाय समस्तगुणराशये ।
विमलानन्ददेहाय कमलापतये सदा ॥१॥

मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।
वाग्यज्ञरूपा लक्ष्मीशस्तया प्रीणातु केशवः ॥२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना संगृहीते न्यायामृते चतुर्थः परिच्छेदः ॥ समाप्तम् ॥ श्रीरामाय नमः संवत् १७४६ ॥

१. लिखाई प्रायः शुद्ध है ।
२. संख्या १२ से १७ तक के पत्र नहीं हैं ।
३. संख्या २१ दो पत्रों पर लगी है ।
४. पुस्तक अच्छी अवस्था में है ।

—:0:—

क्रमसंख्या ३५

## भगवद्गीता सुबोधिनीटीकायुता ।

टीकाकारः श्रीधरस्वामी ।
वेदान्त । दे० ना० लिपि । पत्रसंख्या १६० ।
पत्र प्रमाण ३१.६×१४.९ सैं० मी० ।
पंक्तियां ११ प्रतिपृष्ठ । अक्षर ३३ प्रतिपंक्ति ।
पाठसंख्या ३६३० । पूर्ण ।

### प्रारम्भ :–

**(टीका)** ॐ श्रीगणेशाय नमः ॥
शेषाशेषमुखव्याख्याचातुर्यं त्वेकवक्त्रतः ।
दधानमद्भुतं वन्दे परमानन्दमाधवम् ॥१॥
श्रीमाधवं प्रणम्योमाधवं विश्वेशमादरात् ।
तद्भक्तियन्त्रितः कुर्वे गीताव्याख्यां सुबोधिनीम् ॥२॥
भाष्यकारमतं सम्यक् तद्व्याख्यातृगिरस्तथा ।



यथामति समालोड्य गीताव्याख्यां समारभे ॥३॥
गीता व्याख्यायते यस्याः पाठमात्रप्रयत्नतः ।
सेयं सुबोधिनी टीका सदा ध्येया मनीषिभिः ॥४॥

इह खलु सकललोकवन्दितचरणः परमकारुणिको भगवान्देवकीनन्दनस्तत्त्वाज्ञानविजृम्भितशोकमोहभ्रंशितविवेकनया निजधर्मत्याग परधर्माभिसन्धिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोह सागरात्--उद्धार । तमेवभगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबवन्ध । तत्र च प्रायशः श्रीकृष्णमुखनिःसृतानेव श्लोकानलिखत् । कांश्चित्तत्सङ्गतये स्वयं व्यरचयत् । यथोक्तं

**गीता महात्म्ये ।**

"गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तेरेः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥" श्रीकृष्णाय नमः । तत्र तावद्धर्मक्षेत्र इत्यादिना विषीदन्नमिदमब्रवीदित्यन्तेन ग्रन्थेन श्रीकृष्णार्जुन संवादप्रस्ताव कथा निरूप्यते धृतराष्ट्र उवाच । धर्मक्षेत्र इति । भो सञ्जय, धर्मभूमौ कुरुक्षेत्रे मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवः योद्धमिच्छन्तः समवेता मिलिताः किं कृतवन्तः ।

**(मू०)** धृतराष्ट्र उवाच ।
धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥१॥

### समाप्ति :-

**(मू०)** यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयोभूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायाँ योगशास्त्रे श्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसंन्यासयोगो नामाष्टदशोऽध्यायः ॥१८॥

**(टी०)** यमेवैष वृणुते तेन लभ्य इत्यादिश्रुतिस्मृतिपुराण वचनान्येवं सति समञ्जसानि भवन्ति तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धम् ।

तेनैव दत्तया मत्या तद्गीताविवृतिः कृता ।
स एव परमानन्दस्तया प्रीणातु माधवः ॥१॥

परमानन्दपादाब्जरजःश्रीधारिणाधुना ।
श्रीधरस्वामियतिना कृता गीतासुबोधिनी ॥२॥

स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतास्तदन्तर्गतं
तत्त्वं प्रेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना ।
अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरन्तर्मणीन् ।
आवर्त्तेषु न किं निमज्जति जनः सत्कर्णधारं विना ॥३॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगोशास्त्रे श्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसंन्यासादितत्त्वनिर्णययोगो नाम अष्टादशोध्यायः॥१८॥

**समाप्तः**

श्लोकैकं धृतराष्ट्रस्य नव दुर्योधनस्य च ।
द्वात्रिंशत्सञ्जयस्योक्ताः वेदाष्टावर्जुनस्य च ॥१॥

ज्ञानाववोधा वेदाब्धिपञ्च केशवनिर्मिताः ।
गीताग्रन्थप्रमाणं स्यादेवं सप्त शतानि च ॥२॥

१. पाठ प्रायः शुद्ध है ।
२. पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ३६

## योगवाशष्ठिः ।

वाल्मीकि विरचित ।
वेदान्त शास्त्र । देवनागरी लिपि । पत्र-संख्या ४४१ ।
पत्रप्रमाण ३७.५ × २१.५ सैं० मी० ।
पंक्तियां १९ प्रतिपृष्ठ । अक्षर ४२ प्रति पंक्तिः ।
पाठसंख्या २१९९५ । अपूर्ण ।



**प्रारम्भ :–**

(टी०) श्रीगणेशाय नमः । श्रीगुरुगणेशभारतीभ्यो नमो नमो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वशिष्ठविश्वामित्रपराशरादिभ्यः ।

शिवमभयमनाद्यनन्तमध्यं
परमसुखाद्वयबोधमात्रसारम् ।
उपरतसकलभ्रमं विशुद्धं
निजमहसास्फुरदात्मतत्त्वमीडे ॥१॥

उत्पत्तिस्थित्युपशमाख्यैः त्रिभिः प्रकरणैर्जगज्जन्मस्थितिलय-बोधकानामथात आदेशो नेतीत्यादिसर्वप्रपञ्चनिषेधकानाञ्च वेदान्तवाक्यानामध्यारोपापवादन्यायेनात्मतत्त्वव्युत्पादकतया वासनाक्षय मनोनाशपर्य्यन्तज्ञानेन परमपुरुषार्थे तात्पर्य्यपर्य्यवसानं दर्शितम् । अथेदानीं यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । यो वै भूमा तत्सुखम् । यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न विभेति कुतश्चन । तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्मसर्वानुभूः । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुन्दग्धेन्धनमिवानलमित्यादिश्रुतितात्पर्य्यं सिद्धं प्रागुक्तसर्वसाधन साध्य-साक्षात्कारज्ञानफलं निर्व्वाणफलं निर्व्वाणं व्युत्पादयितुं निर्व्वाणा-ख्यमिदं प्रकरणं श्रावयितुं भगवान्बाल्मीकिरुवाच ।

(मू०) श्रीः । बाल्मीकिरुवाच ।
उपशमप्रकरणादनन्तरमिदं शृणु ।
त्वं निर्व्वाणप्रकरणं ज्ञातं निर्व्वाणदायि यत् ॥१॥

**समाप्ति :–**

यदा मामनपेक्ष्यैव स मद्वृत्तात्मनि स्थितः ।
तदा विरागो वैरस्यमनयन्मे जगत्स्थितिम् ॥१६॥

संसारवासनावेशवर्जितास्मि ततोऽवसम् ।
निबध्याभिमतां तीव्रां व्योमसञ्चारधारणाम् ॥१७॥

अर्ज्जयित्वातपोव्योम्नि गतिं धारणया मया ।
अभ्यस्ता धारणा भूयः सिद्धसाङ्गफलप्रदा ॥१८॥

(टी०) मामनपेक्ष्य मदपेक्षाम्विहायैवेत्यर्थः । विरागो जगत्स्थिति-वैरस्यं नीरसतामनयत् । नयतेर्द्विकर्मकता प्रसिद्धा ॥१६॥ इदानीं स्वस्याः

धारणाभ्यासस्थिरचित्तत्वेनाप्युपदेशाधिकारसम्पत्तिरस्तीत्याशयेनाह संसारेति। व्योमसंचारसिद्धिदां प्राग्वर्णितां खेचरीमुद्राख्यां धारणाम् ।।१७।। सिद्धसङ्गः सिद्धैः सह संवादादिव्यवहारस्तत्फलप्रदा। अतएवान्यैरगम्यमपीदं रहःस्थानमागत्य त्वया सह सम्वदामीति भावः ।।१६।।

१. पाठ प्रायः शुद्ध है।
२. यह योगवासिष्ठ का निर्वाणप्रकरण है। इसका पूर्वार्द्ध तो सारा है। परन्तु उत्तरार्द्ध के केवल ६४ सर्ग सम्पूर्ण हैं और ६५वें सर्ग के केवल १८ श्लोक हैं।
३. योगवाशिष्ठ की यह टीका बहुत पहले छपी थी। अब दुष्प्राप्य है।
४. पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ३७।

## रामनामलिखिनविधि।

लेखक अज्ञात।
तन्त्रशास्त्र। दे० ना० लिपि। पत्रसंख्या ४।
पत्र-प्रमाण २६.०×११.७ सें० मी०
पंक्तियाँ ११ प्रतिपृष्ठ। अक्षर ३६ प्रतिपंक्ति।
पाठसंख्या ४५। पूर्ण।

### प्रारम्भ :–

श्रीगणेशाय नमः। देव्युवाच।
भगवन्सकला विद्याः श्रुताश्चाधिगता मया।
इदानीं श्रोतुमिच्छामि यत्त्वं लिखसि वै रहः ।।१।।

ईश्वर उवाच।

ब्रह्मादिविबुधैः सर्वैः पृष्टो न कथितं मया।
तवाग्रे कथयाम्यद्य येन त्वं प्राणवल्लभा ।।२।।

न देयं परशिष्येभ्यो नास्तिकेभ्यो न चेश्वरी।
नाशुश्रूषारतानां च नैवानर्थप्रदायिनाम् ।।३।।



देयं शान्ताय शिष्याय श्रद्धाभक्तियुताय च।
पुत्रायापि न दातव्यं कुत्सितावनिचारिणे ।।४।।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
परीक्षिताय दातव्या वत्सरार्द्धोषिताय च ।।५।।

त्वद्भक्तियन्त्रितो वक्ष्ये सावधानावधारय।
लिखाम्यनुदिनं देवि राममन्त्रं विशेषतः ।।६।।

लिखित्वा धारयित्वा च सर्वैश्वर्यसमन्वितः।
राम रामेति रामेति सर्वस्वं मम वल्लभे ।।७।।

### समाप्ति :–

लेखिन्या तु लिखेन्मन्त्रं वक्ष्ये दर्भाङ्कुरोत्थया।
आकृष्टे तु करञ्जोत्था मारणे तु नरास्थिजा ।।३४।।

स्तम्भकर्माणि विज्ञेया राजवृक्षोद्भवा प्रिये।
शान्तिके पौष्टिके चव आयुष्कामान्विते तथा ।।३५।।

सर्वोपशमने चैव कर्त्तव्या जातिसम्भवा।
हेमजा रौप्यजा वापि शुभकर्मणि सिद्धिदा ।।३६।।

अशुभेषु च सर्वेषु शस्यतेऽशुभलोहजा।
विद्याङ्गारदिने घोरे यदि चोत्पादिता भवेत् ।।३७।।

काष्ठदण्डसमा ज्ञेया सर्वशत्रुनिकृन्तनी।
सौम्ये कर्मणि सर्वत्र रोचनेन लिखेत्प्रिये ।।३८।।

शववस्त्रैश्चिताङ्गारैररिनाशार्थमालिखेत्।
स्तम्भने च विशा प्रोक्ता विद्वेषे च विषोदकम् ।।३९।।

उच्चाटने निशा देवि मारणे रुधिरेण तु।
राज्यप्राप्तौ चन्दनेन पुत्रार्थमपि तेन वै ।।४०।।

गोपनीयं गोपनीयं गोपनीयं महेश्वरि।
एतन्ममैव सर्वस्वं यदुक्तं तव वल्लभे ।।४१।।

इति श्रीरुद्रयामले गौरीश्वरसंवादे रामनामलिखनविधिप्रकाशकः पटलः समाप्तः ।। चैत्र शु० ५ भृगौ १९१६ ।।

१. लिखाई प्रायः शुद्ध है।
२. कहीं कहीं भाषा व्याकरणानुगत नहीं है।
३. कहीं कहीं अर्थ भी स्पष्ट नहीं है।
४. पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ३८।

## लघु शब्दरत्नम् (प्रौढमनोरमाव्याख्या)

हरिदीक्षितविरचितम्।
व्याकरण। दे० ना० लिपि। पत्र-संख्या १०८।
पत्र-प्रमाण ३०.५ × १४.५ सें० मी०।
पंक्तियां १४ प्रतिपृष्ठ। अक्षर ४२ प्रतिपंक्ति।
पाठ-संख्या ३६७६। अपूर्ण।

**प्रारम्भ :–**

श्रीगणेशाय नमः।

शेषविभूषणमीडे शेषाशेषार्थलाभाय।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः॥१॥

ध्यायमिति ध्यात्वेत्यर्थः। एामुलन्त मेतत्। परं सर्व्वजगदुपादानम्। कार्य्यब्रह्महिरण्यगर्भव्यावृत्तय इदम्। ध्यानं चिन्तापरपर्य्यायं स्मृत्यनुकूलव्यापाररूपं स्मरणं तु तज्जन्यमिति शेषः। गुरोरित्येकवचनेन सर्व्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम्। प्रोढानां मनो रमयतीत्यर्थिकां मनोरमाम्। प्रौढत्वं सकलदर्शनार्थज्ञानपूर्व्वकमहाभाष्यगूढार्थज्ञानवत्त्वम्।

**समाप्ति :–**

इहेति। द्विगोर्लुगनपत्य इत्युत्तरम् अचि यूनि फक्फिञोरन्यतरस्यांङ्गोत्रे नेति कार्य्यमित्यर्थः एतेनैव न्यासे द्विरथ इत्यसिद्धिरित्यपास्तम्। ननु द्वयोः सावकाशयोरेकत्र वृक्षेभ्य इत्यत्र दीर्घत्वयोरिवैकस्य द्विकार्ययोगमूलकेनासम्भवेन केवलेनासम्भवेन वा विप्रतिषेध इतीकोगुणवृद्धीत्यादिषु भाष्ये स्पष्टम्। एवञ्च प्रकृते न तस्य विषयोऽत आह अत्र च ज्ञापकमिति।



एवञ्च ज्ञापकादेव बाध्यबाधकभाव इति भावः। आदिवृद्धिप्राप्तिविषये तद्बाधो ज्ञाप्यते अत एव व्यापदि भवम् वै।

१. लिखाई प्रायः शुद्ध है।
२. समासाश्रयविधिप्रकरण तक का भाग सम्पूर्ण है। आगे अपत्याधिकार के "गोत्रे लुगचि" ४।१।८६ सूत्र की व्याख्या पर पाठ समाप्त है।
३. पत्रों की कन्नियों पर व्याख्यात्मक टिप्पणियां भी हैं।
४. पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ३६

## लघुशब्देन्दुशेखरः

नागोजिभट्टविरचितः।
व्याकरण। दे० ना० लिपि। पत्रसंख्या ६७२।
पत्र-प्रमाण २८.०० × १२.२ सें० मी०।
पंक्तियां १० प्रतिपृष्ठ अक्षर ३२ प्रतिपंक्ति।
पाठसंख्या १३१२७ अपूर्ण।

**प्रारम्भ :–**

श्रीगणेशाय नमः।
पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः।
शिवभट्टसुतोधीमान् सतीदेव्यास्तु गर्भजः॥१॥

याचकानां कल्पतरोररिकक्षहुताशनात्।
शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः॥२॥

नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम्।
मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम्॥३॥

ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमनाय समुचितऋषित्रयनमस्काररूपमङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति मुनित्रयमिति। कारकविभक्तेर्बलवत्त्वाद्द्वितीया।

### समाप्ति :–

स्वाङ्गे त–तत्प्रत्ययान्ते स्वाङ्गे उपपदे इत्यर्थः। तत्प्रत्प्रत्यये इति कर्मधारयः। नाथार्थ–यथासङ्ख्यमत्र नेष्यते। आनुलोम्यमानुकूल्यम् तच्च परचित्तानुसरमिति सर्वेष्टसिद्धिः। इत्युपाध्यायोपनामक शिवभट्ट सुत सतीगर्भजनागोजिभट्टकृते लघुशब्देन्दुशेखरे सिद्धान्तकौमुदीव्याख्याने कृदन्तम्। विस्तरस्तु बृहच्छेखरे द्रष्टव्यः। सं० १६१४ वै० शु० ३ ॥

१. पाठ प्रायः शुद्ध है।
२. तीन स्थानों पर पत्राङ्क अशुद्ध लगे हैं। परन्तु पाठ अविच्छिन्न है।
३. पुस्तक अच्छी अवस्था में है।

—:o:—

## वाल्मीकीयम् (सटीकम्) योगवासिष्ठस्य मुमुक्षु व्यवहार-प्रकरणम्।

क्रमसंख्या ४०

वाल्मीकिरचितम्।
टीकाकारः श्रीमदानन्दबोधेन्द्रसरस्वती।
वेदान्त। दे०ना० लिपि। पत्र-संख्या ६५।
पत्र-प्रमाण ३२.५×१८.५ सैं० मी०।
पंक्तियां १६ प्रतिपृष्ठ। अक्षर ४४ प्रति पंक्ति।
पाठसंख्या २८१६। पूर्ण।

### प्रारम्भ :–

(टी०) श्री गणेशाय नमः। अथ मुमुक्षुव्यवहारप्रकरणम् श्री वाल्मीकिरुवाच।

इति नादेन महता वचस्युक्ते सभागतैः।
राममग्रगतं प्रीत्या विश्वामित्रोऽभ्यभाषात ॥१॥

अथ श्लोकस्य व्याख्या।

अजमजरमाद्यमेकं निजसौख्यलवाञ्चितानन्दम्।
हृदि निहितमात्मसारं निगमान्तामृतरसायनं वन्दे ॥१॥



श्रीरामादिमुखेन वर्णितापि साधनसम्पन्मुमुक्षुभिः केन क्रमेण व्यवहरद्भिः सम्पाद्या कथञ्च तया तत्त्वविश्रान्तिलाभ इति प्रत्येकं विविच्य तेषामुपदेशाय द्वितीयं प्रकरणमारभमाणः श्रीबाल्मीकि रुवाच।

स्वयं विचारात्संबुद्धे पित्रा चोक्तेऽप्यविश्वसन्।
जनकोक्त्या शुकस्तत्त्वे विश्रान्त इति कीर्त्यते ॥१॥

तत्रादौ मन्ददौरात्म्यादिसाधनानां सहसैवाधिकारसम्पत्तिभ्रमेण श्रवणादौ प्रवृत्तिर्मा भूदिति शुकाख्यायिकया तत्परिपाकलक्षणानि दर्शयन्नाचार्यदेवविद्या विदिता साधिष्ठं प्रापदिति श्रुतेः कुलाचार्यं वशिष्ठं श्रीरामस्योपदेशनाय पूर्ववृत्तान्तसंस्मारणतत्त्वोपदेशोपक्रमाभ्यां प्रोत्साहयिष्यन् स्वप्रयोजनसिद्धौ श्रवणाय च त्वरमाणो विश्वामित्र एव प्रथममभ्यभाषतेत्याह इतीति। सभायामागतैः सिद्धैः। अग्रगतं पुरःस्थितम्। अधिकारसीम्नि स्थितं च मुख्याधिकारिणां दौर्लभ्याद्रामं रसज्ञतमत्वाद्वर्तिष्यमाणब्रह्मचर्चायां च प्रीत्या ॥१॥

(सू०) ॐ श्रीगणेशाय नमः। बाल्मीकिरुवाच।
इति नादेन महता वचस्युक्ते सभागतैः।
राममग्रगतं प्रीत्या विश्वामित्रोऽभ्यभाषत ॥१॥

न राघव तवास्त्यन्यद् ज्ञेयं ज्ञानवतां वर।
स्वयैव सूक्ष्मया बुध्या सर्वं विज्ञातवानसि ॥२॥

### समाप्ति :–

(सू०) विदितवेद्यमिदं हि मनो मुने
विवशमेव हि याति परं पदम्।
यदवबुद्धमखण्डितमुत्तमं
तदवबोधवशान्न जाहति हि ॥१५॥

इत्यार्षेश्रीरामायणे देवदूतोक्ते द्वात्रिंशत्साहस्र्यां संहितायां वासिष्ठे बाल्मीकीये मोक्षोपाये मुमुक्षुव्यवहारप्रकरणे सदाचारनिरूपणं नाम विंशतितमः सर्गः ॥२०॥

(टी०) मुनेः प्रकृतसाधनसम्पत्त्या मननशीलस्य मनो विदितवेद्यं सत् तद्बलाद्विवशं परं पदमनिच्छदपि याति। न केवलं साधनप्राबल्यादेव

किन्तु वेद्यतत्त्वस्वभावादपीत्याह यदिति। अवबोधवशात् अवबोधाधीनत्वादवबोधात्मकचरमवृत्त्युद्भूतत्वादितियावत् अवधूयाज्ञानतत्कायम् बुद्धं जागरूकम् अखण्डितम् उत्तमं यत्पदं तन्मनो न जहाति। अज्ञानं तु तत्समं बाध्यत एवेत्यर्थः। होति विद्वत्प्रसिद्धौ। तथा चाहुः—'देहात्मज्ञानवहानं देहात्मज्ञानबाधकम्। आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते'।।इति१५।।
इति श्रीपरमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्येण श्रीमद्गङ्गाधरेन्द्रसरस्वतीशिष्येण श्रीमदानन्दबोधेन्द्रसरस्वत्याख्यभिक्षुणा विरचिते वाशिष्ठतात्पर्य्यप्रकाशे मुमुक्षुव्यवहारप्रकरणे विंशतितमः सर्गः।।२०।।

१. पाठ में लिखाई की अशुद्धियां अनेक स्थानों पर हैं।
२. मुद्रित पुस्तकों से इसका पाठ कुछ भिन्न है।
३. पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ४१

## वासवदत्ताख्यायिका

सुबन्धुविरचिता
गद्यकाव्य। दे० ना० लिपि। पत्र-संख्या ६७
पत्र-प्रमाण ३१.५ × १२.५ सें० मी०।
पक्तियां ६ प्रतिपृष्ठ। अक्षर ३२ प्रतिपंक्ति।
पाठ संख्या ८००। पूर्ण।

**प्रारम्भ :–**

ॐ श्रीगणेशाय नमः।।

करवदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी।।१।।

खिन्नोऽसि मुञ्च शैलं विभृमो वयमिति वदत्सु शिथिलभुजः।
भरभुग्नविततवाहुषु गोपेषु हसन् हरिर्जयति।।२।।
कठिनतरदामवेष्टनरेखासन्देहदायिनो यस्य।
राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः।।३।।



स जयति हिमकरलेखा चकास्ति यस्योमयोन्मुखी निहिता।
नयनप्रदीपकज्जल–जिघृक्षया रजतशुक्तिरिव।।४।।

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्योतः।।५।।

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः।
यदयन्न कुलद्वेषी सकुलद्वेषी पुनः पिशुनः।।६।।

अतिमलिने कर्त्तव्ये भवति खलानामतीव निपुणा धीः।
तिमिरे हि कौशिकाना रूपं प्रतिपद्यते दृष्टिः।।७।।

विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाऽभ्यधिकः।।८।।

हस्त इव भूतिमलिनो लङ्घयति यथा·· खलः।
सुजनं दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम्।।९।।

सारसवत्ता विहता नवका विलसन्ति चरति नोकं कः।
सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये।।१०।।

अविदित गुणापिसत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलापि हि हरति दृशं मालती माला।।११।।

गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति।
स्वमहिमदर्शनमक्ष्णोः मुकुरतले जायते यस्मात्।।१२।।

सरस्वतीदत्तवरप्रसादः चक्रे सुबन्धुः सुजनैकबन्धुः।
प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैचित्र्यनिधिर्निबन्धम्।।१३।।

कवीनां विफल दर्प्पो नूनं वासवदत्तया।
शक्तच व पाण्डुपुत्राणां गतया कर्णगोचरम्।।

अभूदभूतपूर्वः सर्व्वोर्व्वीपतिचक्रचारुचूडामणिश्रेणिशाणकोणकषणनिर्मलीकृतचरणनखमणिः नृसिंह इव दर्शितहिरण्यकशिपुपुत्रदान·विस्मयः·· ···

## समाप्ति :—

यस्य अयमाश्रमस्तेन मुनिना पुष्पादिकमाहृत्यागतेन प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायमाश्रमो भग्नः अतः शिलामयी पुत्रिका त्वं भवेति तेन शप्ताहम्। क्षणेन च शिलामयीं मां दृष्ट्वा करुणयापि विक्लवितो वराकोयं बहुदुःखमनुभविष्यति-इत्याह। आर्यपुत्रहस्तस्पर्शावधि शापान्तमकरोत्। ततः कन्दर्पकेतुः समागतेन मकरन्देन वासवदत्तया समं स्वनगरं गत्वा यथाभिलषितानि सुरतसुखान्यनुभवन् कालं निनाय ।। इति वासवदत्ताख्यायिका समाप्ता।। इति सुबन्धुकृता वासवदत्ता सम्पूर्णा ।। शुभमस्तु सर्वजगताम् ।।

१. पाठ प्रायः शुद्ध है।
२. कहीं कहीं पाठ-भेद भी कन्नी पर लिखे हैं।
३. मुद्रित वासवदत्ता से अनेक स्थानों पर इसका पाठ भिन्न है।
४. पुस्तक अच्छी अवस्था में है।

—:0:—

क्रम संख्या ४२।

## विष्णुसहस्रनाम (सटीक)

टीकाकार–श्रीशङ्कराचार्य।
स्तोत्र। दे० ना० लिपि। पत्र-संख्या ३८
पत्र-प्रमाण ३१.२ × १४.५ सैं० मी०
पंक्तियां १५ प्रतिपृष्ठ। अक्षर ४० प्रतिपंक्ति।
पाठसंख्या १४२५। पूर्ण।

## प्रारम्भ :—

**(भाष्य)** श्रीरामाय नमः। श्रीसरस्वतीगुरुकृष्णनारायणादिभ्यो नमोनमः।

254087

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ।। १ ।।
कृष्णद्वैपायनं व्यासं सर्वलोकहिते रतम् ।
वेदाब्जभास्करं वन्दे शमादिनिलयं मुनिम् ।। २ ।।



सहस्रमूर्त्तेः पुरूषोत्तमस्य सहस्रनेत्राननपादबाहोः ।
सहस्रनामस्तवनम्प्रशस्तं निरुच्यते जन्मजरादिशान्त्यै ।।
श्रीवैशम्पायनो जनमेजयमुवाच श्रुत्वेति ।

(मूल) यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ।।१।।

## समाप्ति :—

**(मूल)** इमं स्तवं भगवतो विष्णोर्व्यासेन भाषितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्ति सुखानि च ।।२१।।

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययौ ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ।।२२।।

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां शान्तिपर्वणि विष्णोर्दिव्यसहस्रनाम सम्पूर्णं। शुभम्भूयात् ।।

**(भाष्य)** आचारवतामधिकारं दर्शयति इममिति। इमं स्तवमित्यादिना सहस्रशाखाज्ञानेन सर्वज्ञेनभगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्वैः सादरं पठितव्यं सर्वफलसिद्धये इति दर्शयति विश्वेश्वर मित्यादिना। विश्वेश्वरोपासना देवस्तोतारस्ते धन्याः कृतार्थाः कृत कृत्या इति दर्शयति "प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादितिश्रुतेः" ।। "आदरेण यथा स्तौति धनवन्तं धनेच्छया। तथा चेद्विश्वकर्त्तारं को न मुच्येत बन्धनात् ।।" इति व्यासवचनम् ।।

सहस्रनामसंबद्धा व्याख्या सर्वसुखावहा ।
श्रुतिस्मृतिन्यायमूला रचिता हरिपादयोः ।।

इति श्रीगोविन्द भगवत्पादशिष्य श्रीशङ्कराचार्यकृतं श्रीविष्णोर्दिव्यसहस्रनाम्नां विवरणम् ।।

सकृत् मात्रेण कृष्णस्य नाम्ना मुच्येत पूरुषः ।
नाम्नां पुनः सहस्रेण का कथा इति मे मतिः ।।१।।

श्रद्धया लिखितं नाम्नां सहस्रं नृहरेर्मया ।
आशु तुष्यतु गोविन्दो नृसिंहो मे गुरुर्गुरुः ।।२।।

कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्त्तनम् ।
वासुदेवं जगद्योनिं नौमि नारायणं हरिम् ।।३।।

संवत् १७३८ वर्षे मांगस्र वदि षष्ठम्याः वार सनीचरवार इन्द्रप्रस्थाने मध्यालिखितं वैष्णव-रामदासेन स्वयं विचारणार्थम् । शुभमस्तु ।

१. लिखाई की अशुद्धियां बहुत हैं।
२. यह भारतोक्त विष्णु सहस्र नाम है। इसके अतिरिक्त एक पद्म-पुराणोक्त विष्णुसहस्रनाम, (ग्रन्थाङ्क १६६४८) हमारे संग्रहालय में है।
३ पुस्तक अच्छी अवस्था में है।

—:o:—

क्रम संख्या ४३

## महाभाष्यम् :—

पतञ्जलि विरचितम् ।
व्याकरण । दे०ना० लिपि । पत्र-संख्या १०८ ।
पत्र-प्रमाण ३१.०० × १५.४ सैं०मी०
पंक्तियां १६ प्रतिपृष्ठ । अक्षर ४१ प्रतिपंक्ति ।
पाठ-संख्या ४४२८ । अपूर्ण ।

## प्रारम्भ :–

ॐ स्वस्ति श्री गणेशाय नमः । अथ शब्दानुशासनम् । अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् । केषां शब्दानाम् ? लौकिकानां वैदिकानां च ।

## समाप्ति :–

अनवकाश एकशेषो द्वन्द्वं बाधिष्यते । ननु चोक्तं सावकाश एकशेषः कोऽवकाशः ? तिङन्तान्यवकाश इति । न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति । किं कारणम् ! यथाजातीयकानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति तथा जातीयकानामेकशेषः । न च तिङन्तानां द्वितीयस्य



प्रयोगे सामर्थ्यमस्ति । कि कारणम् ? एका हि क्रिया एकेनोक्तत्वात्त-स्यार्थस्य द्वितीयस्य प्रयोगेन न भ . ... .....

१. पाठ प्रायः शुद्ध है।
२. "सरूपाणामेकशेष एक विभक्तौ" ।१।२।६४ सूत्र पर आकार पाठ समाप्त हो जाता है।
३. पुस्तक अच्छी अवस्था में है।

—:o:—

क्रम संख्या ४४

## व्याससूत्रवृत्ति :–

रङ्गनाथविरचिता ।
वेदान्त । देवनागरी लिपि । पत्र-संख्या १५६ ।
पत्र-प्रमाण २६.०० × १२.१ सैं०मी० ।
पंक्तियां १० प्रतिपृष्ठ । अक्षर ४० प्रतिपंक्ति ।
पाठ-संख्या ३६०० । पूर्ण ।

## प्रारम्भ :–

श्री गणेशाय नमः ।
प्रत्यग्ज्योतिःस्वरूपं तमवाङ्मनसगोचरम् ।
श्रीवासुदेवं साष्टाङ्गं प्रणम्य सकलेष्टदम् ।।
विद्यारण्यकृतैः श्लोकैः नृसिंहाश्रमसूक्तिभिः ।
सन्दर्भ्या व्याससूत्राणां वृत्तिर्भाष्यानुसारिणी ।।
आनन्दाश्रमपादाब्जपरागाणां कृपाबलात् ।
लिख्यते रङ्गनाथेन विद्वज्जनमनोहरा ।।

तेषु श्लोकेषु मध्ये —

एको विषयसंदेहपूर्वपक्षावभासकः ।
श्लोकोऽपरस्तु सिद्धान्तवादी संगतयः स्फुटाः ।।
शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा ।
शास्त्रादि विषये ज्ञाते तत्तत्सङ्गतिरूह्यताम् ।।

शास्त्र ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः ।
समन्वयाविरोधौ द्वौ साधनं तु फलं तथा ।।

तत्र प्रथमाध्याये—

समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ।
ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वदः क्रमात् ।।

## समाप्ति :-

इतश्च न तेषां निरङ्कुशमैश्वर्यमित्याह । भोगमात्रसाम्यलिङ्गाच्च । भोगमात्रमेषामीश्वरेण समानं श्रूयते । आपो वै खलु मीयन्ते लोकोऽसावित्यादिना । एवं हैवं विदं सर्वाणि भूतान्यवन्तीति भेदव्यपदेश-लिङ्गाच्चेत्यर्थः ।। नन्वेवं सातिशयत्वादन्तवत्त्वमप्यैश्वर्यस्यात्तथा चाना-वृत्ति बोधशास्त्रविरोधस्तत्राह । अनावृत्तिः शब्दादनावृत्तिः शब्दात् ।। अर्चिरादिमार्गेण ब्रह्मलोकं गतस्य साति शयैऽश्वर्यत्वेऽपि नावृत्तिर्भवति । एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं मावर्त्तन्तं इति श्रुतेः । सूत्राभ्यासः शास्त्र-समाप्तिद्योतनार्थः ।।

गुरूणां चरणाम्भोजकृपया लिखिता मया ।
वृत्तिः श्रीव्याससूत्राणां प्रीत्यै साऽस्तु जगद्गुरोः ।।७।।

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीआनन्दाश्रमचरणारविन्दसे-वापरायणेन रङ्गनाथेन लिखितायां व्याससूत्रवृत्तौ चतुर्थोऽध्यायः समाप्तः ।।

१. लिखाई की अशुद्धियां यत्र-तत्र रह गई हैं ।
२. पत्रों की कन्नियों पर अनेक छोटी छोटी टिप्पणियां भी हैं ।
३. पुस्तक अच्छी अवस्था में है ।
४. सम्भवतः यह वृत्ति अब तक मुद्रित नहीं हुई ।

—:o:—

क्रमसंख्या ४५

# शालि होत्र ।

नकुलविरचित ।



अश्ववैद्यक । दे० ना० लिपि । पत्र-संख्या ६ ।
पत्र-प्रमाण ३०.७×१४.८ सें०मी० ।
पंक्तियां १४ प्रतिपत्र । अक्षर ४५ प्रति पंक्ति ।
पाठसंख्या ३५४ । पूर्ण ।

## प्रारम्भ :-

श्रीगणेशाय नमः ।
जयति स पाण्डवनाथो धर्मनिधानो युधिष्ठरो नृपतिः ।
भीमार्जुनसहदेवास्तदनु च ये वाजिशास्त्रतत्त्वज्ञाः ।।१।।

दृष्ट्वा सम्यक् नकुलः शास्त्रं कृत्स्नं च शालिहोत्रस्य ।
ब्रूते शास्त्रमनन्तं शास्त्रं कृत्वा समासेन ।।२।।

सपक्षा वाजिनः पूर्वं सञ्जाता व्योमचारिणः ।
गन्धर्वेभ्यो यथाकामं गच्छन्ति च समन्ततः ।।३।।

तान्दृष्ट्वा जवसम्पन्नानाढयान्वाहनोचितान् ।
शक्रः प्रोवाच पार्श्वस्थं शालिहोत्रं मुनीश्वरम् ।।४।।

## समाप्ति :-

चम्पकं मालतीमूलं सु···तुस्तूरसं तथा ।
अश्वानां नाशयत्याशु विषं जङ्गमसंस्थितम् ।।१५।।

इति श्रीनकुलकृते चिकित्सिते विषयप्रयोगो नाम त्रयोदशोऽध्यायः ।।१३।। संवत् १८७३ ज्येष्ठ शुदि १५ रविवासरे लिपिकृतं बालकृष्णेन ।।शुभम् ।।

१ पुस्तक के प्रारम्भिक श्लोक तथा अध्यायों की पुष्पिकाओं के अनुसार इस का नाम "अश्वचिकित्सितम्" है। परन्तु पत्रों की कन्नी पर नाम "शालि०" लिखा है ।
२ लिखाई की अशुद्धियां भी हैं और कई स्थानों पर बीच बीच में अक्षर भी छूटे हुए हैं ।
३ पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ४६

## स्वरप्रक्रिया ।

रामचन्द्रविरचिता ।
व्याकरण । दे० ना० लिपि । पत्र-संख्या ६१ ।
पत्र-प्रमाण ३०.४×१४.४ सैं०मी० ।
पंक्तियां १७ प्रतिपृष्ठ । अक्षर ४३ प्रतिपंक्ति ।
पाठसंख्या २७८६ । पूर्ण ।

### प्रारम्भ :–

ॐ स्वस्ति श्रीगणेशायनमः

उच्चैरुदात्तः । ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे उच्चारितोऽच् उदात्तसंज्ञः स्यात् । देवः । नीचैरनुदात्तः । नीचैः स्थाने उच्चारितोजनुदात्तसंज्ञः स्यात् । देवः । समाहारः स्वरितः । उदात्तानुदात्तयोर्मेलनं समाहारस्तद्वानच्स्वरितसंज्ञः स्यात् । तस्यादित उदात्तमर्द्धह्रस्वम् । तस्य स्वरितस्यादितोऽर्द्धमात्रोदात्ता बोध्या परिशेषात्परिशिष्टमनुदात्तम् । क्व वो श्वाः । न येराः । तेर्ज्यमत्रचतुर्थांश उदात्तः । केचिद्ध्रस्वग्रहणमतन्त्रम्-स्वरितस्यार्द्धमुदात्तं बोध्यमित्याहुः । तेषां मतेऽर्धमुदात्तमर्धमनुदात्तम् । उदात्तस्वरितपरत्वे इदम् । तदपरत्वे तु परिशिष्टस्यानुदात्तस्योदात्तश्रुतिरुक्ता प्रातिशाख्ये । अग्निमीळ्ठे ।

### समाप्ति :–

तयोर्य्वावचि संहितायाम् ।। तयोरिकारोकारयोः क्रमाद्यकारवकारौ स्तोचि परे संहितायां विषये । अग्ना ३ याशा । पटा ३ वाशा । अग्ना३ विन्द्रम् । पट ३ वुदकम् । अचि किम् । अग्न ३ इ । पट ३ उ । संहितायां किम् । अग्न३ इन्द्रम् पश्य । तयोरिति स्पष्टार्थम् ।। इदुतोरधिकारात् इदुतोरसिद्धत्वादिको यणाचीति न प्राप्नोतीत्ययमारम्भः । ननु प्लुतस्य प्रकृतिभावविधानसामर्थ्यात्प्लुतस्य स्वरसन्धिषु सिद्धत्वं भविष्यति । सामान्येन प्लुतप्रकरणे यदुक्तम् तत्सर्वं स्वरसन्धिषु सिद्धमिति ज्ञापकमाश्रीयते इति इदुतोरपि सिद्धत्वात्तयोर्यण् सिद्ध इति चेदेवमपि सवर्णदीर्घनिवृत्यर्थं शाकलनिवृत्यर्थं च वक्तव्यमेतत् । न चैवमपि इकोयणचोति सूत्रस्थवार्त्तिकेन सिद्धम् । प्लुतपूर्वस्य चेको यण वाच्यः



इदं त्वावश्यकम् । भो३यिडा । भो३इन्द्रम् । भो शब्दस्य छान्दसः प्लुतः । ततः परस्येकारस्य निपातत्वात्प्रकृति भावं बाधित्वा यणादेशः । तथा तेनैव वचनेन सिद्धत्वात्सूत्रं किमर्थमिति चेत् उच्यते अग्ना ३ या शापट ३ वुदकमित्यत्र यणि उदात्तस्वरितयोरित्याकार उकार एव स्वरितः स्यात् । अस्य पूर्वत्रासिद्धमित्यसिद्धत्वादुदात्तस्वारितयोरिति स्वरितत्वं न सम्भवति । अस्यार्थस्य संग्रहार्थौ भाष्ये श्लोकौ—

किन्तु यणा भवतीह न सिद्ध
य्वाविदुतोर्यणयं विदधाति ।
तौ च मम स्वरसन्धिषु सिद्धौ
शाकलदीर्घविधी तु निवर्त्त्यौ ।।१।।

इक्तु यदा भवतिप्लुतपूर्व
स्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ
णय स्वर बाधनमेव··· ··हेतुः ।।२।।

इति वाक्यस्वराः ।।

इति श्रीशेषकुलोद्भवनागाह्वयपण्डितसूनुरामचन्द्रपण्डितविरचिता स्वरप्रक्रिया समाप्ता ।।

१ यह स्वरप्रक्रिया सिद्धान्त कौमुदी के स्वर प्रकरण से सर्वथा भिन्न है ।
२ पाठ प्रायः शुद्ध है ।
३ पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ४७

## श्रीमद् भागवतम् (प्रथमस्कन्धमात्रम्) ।

श्रीधरी टीकासहितम् ।
टीकाकार:श्रीधरस्वामी ।
पुराण । दे० ना० लिपि । पत्रसंख्या ४६ ।
पत्रप्रमाण । ३७.४×१५.६ सैं० मी० ।

पंक्तियां १६ प्रतिपृष्ठ । अक्षर ४७ प्रतिपंक्ति ।
पाठसंख्या २३०३ । प्रथमस्कन्ध पूर्ण ।

## प्रारम्भ :–

(मूल) जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेस्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ।।

(टीका) ॐस्वस्ति श्रीगणेशाय नमः ।। ॐ नमो नारायणाय ।। ॐ नमः श्री ………सनिवासाय श्रीरामचन्द्राय ।।१।। वागीशा यस्य वदने लक्ष्मीर्य ……विश्वसर्गाविसर्गादि नवलक्षणलक्षितम् ।। श्रीकृष्णाख्यं परं………

## समाप्ति :–

(मूल) नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम् ।
न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ।। ३९।।
सूतोवाच ।।
एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ।
प्रत्यभाषत सर्वज्ञो भगवान्बादरायणिः ।।४०।।
इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां पारमहंस्यां प्रथमस्कन्धे एकोनविंशोऽध्यायः ।।१९।।

(टीका) नूनमिति ।। गोदोहनमात्रकालमपि ।।३९।। एवम् अहो इत्यादिकया श्लक्ष्णया मधुरया गिरा आभाषितः अभिमुखीकृतः ।।४०।।
प्रथमस्कन्धगूढार्थपदभावार्थदीपिका ।।
सद्भिरुद्दीपनीयेयं यथा स्यात्तत्त्वदीपितम् ।।१।।
आर्य्यं धर्मजमाहतारिमवनौ कृत्वा परीक्षिन्नृपम्
ब्रह्मास्त्रादभिरक्षितं कलिजयख्यातं च कृत्वा भुवि ।
अन्ते यः शुकरूपतः स्वपरमज्ञानोपदेशेन तम्
शापादावदमुं भजामि परमानन्दाकृतिं माधवम् ।।२।।



इति श्रीभगवते प्रथमस्कन्धे एकोनविंशोऽध्यायः ।।१९।। संवत् १८८० भाद्रपदशुक्ल नवम्याम् ।।

१. पुस्तक का प्रथम पत्र आधा फटा हुआ है ।
२. लिखाई की अशुद्धियां अनेक स्थलों पर बड़ी खटकनेवाली हैं ।
३. स्कन्ध की समाप्ति पर श्रीधरी में एक श्लोक "प्रथम स्कन्धगूढार्थ ·· "इस पुस्तक में अधिक हैं । हमारे श्रीमद्भागवत, क्रम संख्या ५०२१२ में यह श्लोक नहीं है ।
४. पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ४८

## छान्दोग्योपनिषद् ।

शाङ्करभाष्य तथा भाष्य पर टीका ।
टीकाकार भगवदानन्द स्वामी ।
उपनिषद् । दे० ना० लिपि । पत्र संख्या ३०० ।
पत्र-प्रमाण ३२.४×१८.२सैं० मी. ।
पंक्तियां १४ प्रतिपृष्ठ । अक्षर ४३ प्रतिपंक्ति ।
पाठ-संख्या ११२८७ । पूर्ण ।

## प्रारम्भ :–

(मूल) ओमित्येतदक्षरमुद्गीथमुपासीत ।
ओमिति ह्युद्गायति तस्योपव्याख्यानम् ।

(भाष्य) श्रीगणेशाय नमः । ओमित्येतदक्षरमित्याद्यष्टाध्यायी छांदोग्योपनिषत् । तस्याः संक्षेपतोऽर्थजिज्ञासुभ्यो ऋजु-विवरणम् अल्प-ग्रन्थमिदभारभ्यते ।।

(टीका) श्रीगणेशाय नमः ।
नमो जन्मादिसम्बन्धबन्धविध्वंसहेतवे ।
हरये परमानन्दवपुषे परमात्मने ।।१।।

नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ।।२।।

छान्दोगानामुपनिषद्भेदं व्याचिख्यासुर्भगवान्भाष्यकारश्चिकीर्षित-ग्रन्थपरिसमाप्तिप्रचयपरिपन्थिदुरितनिबर्हणसिध्यर्थमोंकारोच्चारणलक्ष-णम् मंगलाचरणं सम्पादयन् व्याख्येयस्वरूपं दर्शयति ओमित्येतदिति । व्याख्यानं सप्रयोजनं प्रतिजानीते तस्या इति ।

## समाप्ति :—

**(मूल)** अन्यत्र तीर्थेभ्यः स ख···वं वर्त्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते ।।१५।। इति अष्टमः प्रपाठकः ।।८।। छान्दोग्योपनिषत्समाप्ता ।।

**(भाष्य)** अन्यत्र तीर्थेभ्यस्तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्वाश्रमिणां चैतत्समानं तीर्थेभ्योऽन्यत्र हिंसैवेत्यन्ये वर्णयन्ति । कुटुम्बे एवैवतत्सर्वं कुर्वन् खल्वधिकृती यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैवं वर्त्तयन् ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते ।। पुनरावृत्तेः प्रतिषेधात् ।। धामिकान् ।। अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसम्पद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक्ततो नावर्त्तत इत्यर्थः ।। द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ।।१५।। श्री गोविन्दभगवत्पूज्य-पादशिष्यपरमहंस परिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ छान्दोग्यो-पनिषद्विवरणे अष्टमोऽध्यायः समाप्तः ।।८।। समाप्तमिदं छान्दोग्यो-पनिषद्विवरणम् ।। शुभमस्तु ।। मङ्गलमस्तु ।।

**(टीका)** एवं वर्त्तन्नित्यस्य व्याख्यानमेवं यथोक्तेन प्रकारेण कुर्वन्निति अप्राप्तप्रतिषेधा शङ्कां वारयति ।। पुनरावृत्तेरिति ।। चन्द्रलोकादिवत् ।। ब्रह्मलोकादपि प्राप्ता पुनरा-वृत्ति स्तस्या न चेत्यादिना प्रतिषे-धान्नाप्राप्तप्रतिषेधप्रसक्तिरित्यर्थः ।। अपुनरावृत्तिवाक्यस्थान्यक्षराणि व्याकरोति ।। अर्चिरादिनेति ।। प्रागिति महाप्रलयात्पूर्वकालोक्तिस्ततो ब्रह्मलोकादित्यर्थः ।।

वियदादि जगज्जातं जातमज्ञानतो यतः।
तदस्मि नामरूपादिविरहि ब्रह्म निर्भयम् ।।



नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ।।

इति श्रीमत्परमहंसपरिव्राजक श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायामष्टमोध्यायः ।।८।। शके १७४१ प्रमादी नाम संवत्सरमाघकृष्ण तृतीयासौम्यवासरे लिखितम् ।।

१. लिखाई में अशुद्धियां बहुत कम हैं ।
२. पुस्तक अच्छी अवस्था में है ।
३. प्रत्येक प्रपाठक की पत्र-संख्या अलग अलग है ।

—:o:—

क्रमसंख्या ४९

## रामायण ।

तुलसीदास विरचित
भक्तिकाव्य । दे० ना० लिपि । पत्र संख्या १८४
पत्र-प्रमाण ३०.६×१५.७ सैं०मी०
पंक्तियां १४ प्रतिपृष्ठ । अक्षर ३२ प्रतिपंक्ति ।
पाठ संख्या ५१६४ । खण्डित ।

## प्रारम्भ :-

श्रीगणेशाय नमः ।

वर्णानामर्थसंघानां रसानां छंदसामपि ।
मंगलानां च कर्तारौ वन्दे वाणीविनायकौ ।।१।।

भवानीशंकरौ वन्दे श्रद्धाविश्वासरूपिणौ ।
याभ्यां विना न पश्यंति सिद्धाः स्वांतस्थमीश्वरम् ।२।

वन्दे बोधमयं नित्यं गुरुं शंकररूपिणम् ।
यमाश्रितो हि वक्रोपि चंद्रः सर्वत्र वंद्यते ।।३।।

सीतारामगुणग्रामपुण्यारण्यविहारिणौ ।
वंदे विशुद्धविज्ञानौ कवीश्वरकपीश्वरो ।४।।

उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम् ।
सर्वश्रेयस्करीं सीतां नतोहं रामवल्लभाम् ।।५।।

यन्मायावशवर्त्ति विश्वमखिलं ब्रह्मादिदेवासुरा
यत्सत्त्वादमृषैव भाति सकलं रज्जौ यथाहेर्भ्रमः ।
यत्पादप्लवमेव भाति हि भावाम्भोधोस्ततीर्षावताम्
वंदेहं त···शेष कारणपरे रामाख्यमीशं हरिम् ।।६।।

नानापुराणनिगमागमसंमतं यद्
रामायणे निगदतं क्वचिदन्यतोपि ।
स्न्तः सुखाय तुलसी रघुनाथगाथा
भाषानिबन्धमतिमंजुलमातनोति ।।७।।

सोरठा

जिह सुमिरत सिधि होय गणनायक करिवरवदन
करौ अनुग्रह सोई बुद्धि राशि शुभगण सदन ।।१।।

**समाप्ति :-**

कोशलपति गति मुनि जन कौरा ।
भे सब लोग सोक बस बौरा ।।
जेहि देख। तेहि समय बिदेहू ।
नाम सत्य अस लाग न काहू ।।
नारि कुचाल सुनत महिपालहिं ।
सूझ न जस कछु मणि बिनु व्यालहिं ।।
भरत राज रघुबर बनवासू ।
भा मिथिलेशहि हृदय हरासू ।।
नृप बूझे बुध सचिव समाजू ।
कहहुं विचारि उचित का आजू ।।
समुझि अवध असमंजस दोऊ ।
चलिय कि रहियन कह कछु कोऊ ।।
नृपति धीर धरि हृदय विचारी ।
पठये अवध चतुर चर चारी ।।



बूझि भरत सतभाव सुभाऊ ।
आयेहू बेगि न होई लषाऊ ।।

दोहा ।

गये अवध चर भरत गति बूझि देखि करतूति ।।
चले चित्रकूटहि भरत । चार चले तिरहूति ।।२७४।।

चौपाई

दूतन्ह आई भरत की ···

१. बालकाण्ड सम्पूर्ण है । उसमें पत्र ४७ नहीं है। अयोध्याकाण्ड अपूर्ण है । २७४ दोहे से आगे का भाग नहीं है । अयोध्या काण्ड में भी पत्र ५४ नहीं है ।
२. लिखाई की अशुद्धियां बहुत कम हैं ।
३. पुस्तक अच्छी अवस्था में है ।
४. बालकाण्ड की पुष्पिका के अन्त में इसके लिखे जाने का समय "समत् १६२४ का" लिखा है ।

—:o:—

क्रमसंख्या ५०

## अनुमितिनिरूपण (बुधामोददाव्याख्या सहितम्)

रामनारायणाचार्यः ।
टीकाकारः स्वयम् ।
न्यायशास्त्र । दे० ना० लिपि । पत्र-संख्या २५ ।
पत्र-प्रमाण ३२.५ × १६.७ सें० मी०
पंक्तियां १३ प्रतिपृष्ठ । अक्षर ३१ प्रतिपंक्ति ।
पाठसंख्या ६२६ ।

**प्रारम्भ :—**

**(टीका)** ॐश्री श्री गणेशसरस्वतीगुरुद्विजहरितत्त्वविद्भक्तिमद्भ्चो नमः ।। भगवद्रूपनिखिलचराचरप्रपञ्चाय नमः ।।

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥१॥

श्रीरामसिंह स्वगुरुं प्रणम्य सदासुखं श्रीहरिनाथदेवम् ।
सावित्रदं चैव भवानिदासं सुचेतरामाख्यनृपं स्वतातम् ॥२॥

क्षमां इ मातरं नत्वा तद्राज्ञीं विष्णुतत्पराम् ।
प्रमितिग्रन्थसद्व्याख्यां कुर्वे कृष्णप्रणोदितः ॥३।

गणेशं च गिरं वन्दे ह्यजं शम्भुं शिवां सुरान् ।
वन्दे ब्रह्मविदो विप्रान् वैष्णवान् तद्व्रतान् सतः ॥४॥

सर्वात्मकं हरिं वन्दे विश्वंचैव तदात्मकम् ।
तत्कृपामाश्रितः कुर्वे सद्व्याख्यां बुधमोददाम् ॥५॥

मूलग्रन्थेऽपि जगन्मङ्गलमङ्गलबोधिकां श्रीगोपालतापनीयश्रुतिरेव-मङ्गलत्वेनानुसंधीयते ॥ सच्चिदानन्देति ॥ कृष्णाय नम इति अन्वयः ।

कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यमिधीयते ॥

इति कृष्णशब्देन तत्पदलक्ष्यनिर्देशः । ननु कृष्णस्य रासादिक्रियावत्त्वेन कथं तत्पदलक्ष्याक्रियब्रह्मात्मत्वम् तत्राहाक्लिष्टकर्मणे अविद्यादिक्लेशा-सम्बन्धिस्वरूपात्मकमेव रासादिकर्मयस्येति तत्र स्वरूपातिरिक्तक्रिया-समवायास्वीकारेण न सक्रियत्वमितिनाक्रियत्वविरोधः । यद्वा वाचामगोचरे साक्षादभिधया वागाप्रवृत्तेर्वेदान्तैकवेद्ये प्रमाणान्तरासञ्चारात् लक्षणया तद्बोधाय वाच्यसम्बन्धस्फूर्त्ति विना शक्यसम्बन्धो लक्षणेति लक्षणाप्रवृत्त्यसम्भवात्तदर्थं तत्पदवाच्यार्थज्ञापनायाहाक्लिष्टकर्मण इति अक्लिष्टानि ईक्षणसङ्कल्पमात्रसाध्यानि जगत्सर्गस्थितिलयादीनि कर्माणि यस्य तस्मै ।

**(मूल)**

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥१॥



रामसिंह गुरुं नत्वा हरिनाथं सदासुखम् ।
वर्णदं पितरं बालबोधायानुमितिं ब्रुवे ॥२॥

अनुमितिकरणमनुमानम् ।
परामर्शजन्यं ज्ञानमनुमितिः ।

## समाप्तिः—

**(मूल)**

यस्य हेतोः साध्याभावः प्रमाणान्तरेण निश्चितः स हेतुर्बाधितः । यथा सर्वाणि ब्रह्मात्मभेदबोधकानि द्वैतसत्यत्वबोधकानि अनुमानाभासानि । अयमात्मा ब्रह्म, अहं ब्रह्मास्मि, तत्त्वमसि, तत्त्वमेव, त्वमेवतत्, आमैत्व नृसिंहो देवो ब्रह्म भवति, नान्योऽतोऽस्ति द्रष्टा, अतोन्यदार्त्तम्, नेह नानास्ति किञ्चनेत्यादिश्रुतिभिः अहमात्मा गुडाकेश, कृष्णमेनमवैहि त्वमात्मानमखिलात्मनाम्, अयं प्रपञ्चो मिथ्यैव, सत्यं ब्रह्माहमद्वयम्, अत्र प्रमाणं वेदान्ता गुरुः स्वानुभवस्तथा—इत्यादि स्मृतिभिश्च बाधितानि ॥ इति श्रीविष्णुसख्यापन्नश्रीरामनारायणविरचित मनुमितिनिरूपणं समाप्तम् । तेन हरिस्तुष्यतु प्रसन्नो भवतु ॥

**(टीका)** कृष्णमेनमवैहि त्वमिति पाञ्चरात्रे वैष्णवतन्त्रे अयं प्रपञ्च इत्यादि न च यथा वह्निरनुष्णो द्रव्यत्वात् इति अत्रानुष्णत्वं साध्यं तदभावः उष्णत्वं स्पर्शेन प्रत्यक्षेण गृह्यते इति बाधितत्वम् । आकरजे वह्नौ स्वर्णादौ वह्नेरनुष्णत्वनिर्द्धारात् द्रव्यमात्रे क्वापि उष्णत्वानिश्चयात् वायुजलादौ स्पर्शप्रत्यक्षेणोष्णत्वग्रहेऽपि भवद्भि-स्तन्निमित्तान्तरकल्पनेनास्वीकारात्प्रत्यक्षस्य च नभोनीलिमादिप्रत्यक्ष-वदाभासत्वसंशयग्रस्तस्यावश्यं बाधकत्वासम्भवाच्च ॥

नत्वा गुरून् हरिं भक्त्या व्याख्येयं बुधमोददा ।
तत्कृपावेशतः कृत्वा तत्पदाब्जे समर्प्यते ॥१॥

इति श्रीविष्णुसख्यापन्नश्रीरामनारायणविरचिता स्वकृतानु-मितिनिरूपणव्याख्या बुधमोददा समाप्ता तयाहरिगुरुवैष्णवप्रीतिरस्तु ॥

१, लिखाई में अशुद्धियां बहुत हैं । संशोधन करने पर भी अनेक

स्थानों पर अशुद्धियां रह गई हैं ।

२. पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसख्या ५०

## स्वाराज्यसिद्धिः (सव्याख्या) ।

गङ्गाधर सरस्वती ।
वेदान्त । दे० ना० लिपि । पत्र संख्या २०६ ।
पत्रप्रमाण ३२.५ × १५.८ सैं० मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर ३३ प्रतिपंक्ति ।
पाठसंख्या ६७६८ । पूर्ण ।

## समाप्ति :–

**(टीका)** ॐ श्री गणेशायनमः

तरुणतपनवर्णं कर्णलीलावधूत-
भ्रमरनिवहगुंजाकर्णनोद्भूतहर्षम् ।
अमरवरकिरीटोद्‌घृष्टपादाब्जमन्तः
स्फुरतु दलितविघ्नं दन्तिवक्त्रं महो नः ॥१॥

कृपाललितवीक्षणंस्मितमनोज्ञवक्त्राम्बुजम्
शशाङ्ककलयोज्ज्वलं शमितघोरतापत्रयम् ।
करोतु किमपि स्फुरत्परमसौख्यसच्चिद्वपुः
धराधरसुताभुजोद्वलयितं महो मङ्गलम् ॥२॥

जयति स्वजनाज्ञानमत्तवारणदारणः ।
वेदान्तदुर्गमारण्यकेसरी नरकेसरी ॥३॥

सत्तर्काश्मनिशातधारसुमहावाक्यत्रिशूलायुधा-
घातक्षुण्णमदीयमोहमहिषप्राणप्रहाणोद्यता ।
आनन्दामृतवाहिनी प्रणयिनी सा ब्रह्मविद्यामयी
वेदान्तप्रतिवोधिता विजयते विन्ध्याचलाधीश्वरी ॥४॥



सरसिजदलनेत्रां सुप्रसन्नां दधानां
सदभयवरमुद्रापुस्तकं हस्तकञ्जैः ।
विमलवसनभूषामिन्दुकुन्दप्रकाशां
विलसितहृदयाब्जे भारतीं भावयामि ॥५॥

भक्तानां गुरुदैवतैकधिषणादार्ढ्याय देवस्तनौ
व्यक्तिं याति सदा समाधिसमये येषां नृकण्ठीरवः ।
श्रीसर्वज्ञपदं सदर्थकमभूद्यत्रैव तेषामहं
मोहध्वान्तविभाकरायितरजः पादाब्जयुग्मं भजे ॥६॥

श्रीसम्बन्धमुदीक्ष्य वाचकपदे यान् शार्ङ्गिणं वैष्णवा—
श्चन्द्रोत्तंसपदास्पदत्वकलनाच्छम्भुं च शैवा विदुः ।
आनन्दाद्वयशोभमानपरमप्रेमास्पदं योगिनः
तान् पादाम्बुजरेणुधूततमसो वन्दे सदा श्रीगुरून् ॥७॥

सहजकरुणयार्द्रैः सादरं या कटाक्षैः
प्रणतजनसमूहं ध्वस्तमोहं विधत्ते ।
त्रिभुवनविनुतश्री रामभद्राभिधांतां
प्रकटितगुरुमूर्तिं ब्रह्मविद्यां प्रपद्ये ॥८॥

व्याहारैर्मधुरैर्मनोज्ञसहजानन्दामृतस्यन्दिभिः
शिष्येभ्यः करबिल्ववत्प्रथयतस्तत्त्वं परं श्रीगुरून् ॥
रामानन्दमुनीन् मनीषिमुकुटालङ्कारचिन्तामणीन्
सानन्दं प्रणमामि यत्करुणया तीर्णोऽस्मि मोहार्णवम् ॥९॥

कृतिभिरसुकराः क्वनु प्रबन्धाः
क्व च बत बालिशबुद्धिरेष जन्तुः ।
तदपि विरचनेऽत्र सद्‌गुरूणां
सदयनिरीक्षणमेव मेऽवलम्बः ॥१०॥

अभ्यर्थयामि करुणामृतपूर्णचित्तान्
धीरान्प्रणम्य गुणदोषविवेचनाय ।
मात्सर्यपङ्ककलुषाशयदुर्विदग्धान्
मन्ये तृणाय न विदुर्यदमी स्वदोषान् ॥११॥

बहुतरपदनद्ध बालबोधोपयोगात्
सरलमिति महद्भिः साधु नोपेक्ष्यमेतत् ।
सदयहृदयभाजः साभिलाषा न किं स्युः
कविवरवचनोक्ताः काकलीष्वर्भकाणाम् ॥१२॥

प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनादिसिद्धये स्वेष्ट-दैवतं साम्बमीश्वरं सगुणनिर्गुणरूपाभ्यामनुसन्दधानः प्रकृतग्रन्था वान्तर-प्रयोजनस्य ब्रह्मात्मैक्यज्ञानस्य "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" "तपःप्रभावाद्देवप्रसादाच्च" "ईश्वराज्ज्ञानमन्विच्छेत्" "तेषामेवानुकम्पा-र्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" "मत्तः स्मृतिर्ज्ञानमपोहनं च", इत्यादिश्रुतिस्मृतिसहस्रेभ्यः परमेश्वरप्रसादात्त-त्त्वावगमात्तत्प्राप्त्यर्थं भक्तिश्रद्धाप्रणिपातपुरःसरं तमेवेश्वरं प्रार्थयमानो विशिष्टविषयप्रयोजनसम्बन्धाधिकारिलक्षणमनुबन्धचतुष्टयमर्थाद्दर्शयति गङ्गेति—

**(मूल)** गङ्गापूरप्रचलितजटास्रस्तभोगीन्द्रभीता-
मालिङ्गन्तीमचलतनयां सस्मितं वीक्षमाणः ॥
लीलापाङ्गैः प्रणतजनतां नन्दयंश्चन्द्रमौलिः
मोहध्वान्तं हरतु परमानन्दमूर्त्तिः शिवो नः ॥१॥

स्मारं स्मारं जनिमृतिभयं जातनिर्वेदवृत्तिः
ध्यायं ध्यायं पशुपतिमुमाकान्तमन्तर्निषण्णम् ।
पायं पायं सपदि परमानन्दपीयूषधारां
भूयो भूयो निजगुरुपदाम्भोजयुग्मं नमामि ॥२॥

## समाप्ति :-

**(मूल)** वाक्यपुष्पाञ्जलिः सेयं भक्त्या न्यास्ता पदाब्जयोः ।
धियः प्रेरकयोरस्तु शिवयोः प्रीतसिद्धये ॥

**(टीका)**

अस्य ग्रंन्थस्य जगदीश्वरप्रसादजन्यत्वान्निर्दोषत्वमिति सूचयन्स्व-कृतश्रमस्य सार्थक्याय ग्रन्थं स्वबुद्धिप्रेरकस्य जगन्मातापितृ-रूपस्य स्वेष्टदैवतस्य चरणारविन्दयोः समर्पयति वाक्येति ।



सेयं स्वाराज्यसिद्धिः ।
अपरोक्षीकृते तत्त्वे वाक्याद्वा योगतोऽपि वा ।
जीवन्मुक्तस्य धन्यस्य कैवल्यमिह कीर्त्तितम् ॥

नित्यं दिशन्सुकृतिनामभिवाञ्छितार्थान्
निर्वाणसिन्धुसलिलैर्भरिताऽलवालः ।

आनन्दनन्दनवने नितरां निगूढः
कैवल्यकल्पतरुरस्तु मुदे बुधानाम् ॥

वस्वब्धिमुन्यवनिमान १७४८ शके वृषाख्य-
वर्षस्य मघासितवाक्पतियुक्तषष्ठ्या ।
गङ्गाधरेन्द्रयतिना शिवयोः पदाब्जे
भक्त्यार्पिता सुकृतिरस्तु सतां शिवाय ॥

इति श्रीमत्परमहंसपरिव्रजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपा-दशिष्येण श्रीसर्वज्ञसरस्वतीपूज्यपादप्रशिष्येण गङ्गाधरसरस्वत्याख्य-भिक्षुणा विरचितायां स्वाराज्यसिद्धिव्याख्यायां कैवल्यकल्पद्रुमाख्यायां कैवल्यप्रकरणं समाप्तम् ॥

१—लिखाई शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।
३—मुद्रित हो चुकी है ।

—:o:—

क्रमसंख्या ५२ (क)

## महाभारतम् ।

व्यासमुनिविरचितम् ।
टीकाकार वेदान्ति महादेव तथा नीलकण्ठसूरि ।
इतिहास । दे० ना० लिपि । पत्रसंख्या १७४ ।
पत्रप्रमाण ३२.×१७.१ सें० मी० ।
पंक्तियां १४ प्रतिपृष्ठ । अक्षर ४२ प्रतिपंक्ति ।
पाठ संख्या ६५४७ । अपूर्ण (केवल विष्णुसहस्रनाम तथा भगवद्गीता सटीक हैं ।)

## प्रारम्भ :–

विष्णुहस्रनामटीका
ॐ नमो नारायणाय श्रीकृष्णोस्तु प्रसन्नः ॐ नमः सरस्वत्यै ॐ नमो गणे-
णाय नमः ॐ नमः शिवाय

स्वयंप्रकाशतीर्थोपि लब्धवेदांतिसत्पदः
महादेवोर्थमाचष्टे विष्णुनामसहस्रगं

आचार्याः यद्यपि व्याख्यां चक्रुर्नामसहस्रगां
कायवाक्स्वांतसंशुध्यै पुनः कुर्वे तथाप्यहं

मेरौ च परमाणौ च पदार्थत्वं यथा समं
व्याख्यातृत्वं तथा श्रीमदाचार्येषु च मय्यपि

क भारतं क तद् व्याख्या काहं किंतु गुरोः कृपा
मूकं करोति वाचालं पंगुं लंघयते गिरिम्

स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरः
इति भारतव्याख्यानं कृपया मुनिना कृतं

इत्युक्तया सर्ववर्णानां श्रोतव्योयं स्तवो भवेत्
तदर्थश्च ततो व्याख्या मम सर्वोपकारिणी

भाष्यबोधासमर्थानां जनानां हितकार्यय
नोपेक्ष्यः किं तु सत्कार्यो ग्रंथोपि लघुना कृतः

खलैस्तु खलता कार्या न हानिः तावतास्ति मे
कस्तूरी पामरैः त्यक्ता स्वमहत्त्वं किमुह्यति

अनेकविधधर्माणां श्रवणेपि न तृप्तिभाक्
युधिष्ठिरः शांतनवं यत्पप्रच्छात्मतुष्टये ।

यच्च भीष्मः परो भक्तस्तत्र प्रत्युत्तरं ददौ
तत्सर्वं सौतिराचष्टे शौनकादीनृषीन्प्रति ।



वैशंपायन इत्यादि अत्र वैशंपायनो जनमेजयमुवाचेति प्रकरणाल्लभ्यते जनमेजयस्यैव वैशंपायनं प्रति प्रष्टृत्वावगमात्

विष्णुसहस्रनाम (मू०) वैशंपायन उ०

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः
युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत ।।१।।

## समाप्ति :–

विष्णुसहस्रनाम (मू०)

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितं
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ४१

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययं
भजंति ये पुष्कराक्षं न ते यांति पराभवं १४२

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां शांतिपर्वणि दानधर्मे उत्तमानुशासने भगवतो वासुदेवस्य नाम्नां सहस्त्रं संपूर्णमिति भद्रों ।। श्री वासुदेवाय नमः ।।

विष्णुसहस्रानाम (टी०)

इदानीमुक्तं फलं न प्रकृतस्तवपाठस्यैव किंतु यथा कथंचिद्भगवद्भ-जनमात्रस्येत्याह विश्वेश्वरमिति ४२

शरणं मम गोविंदः शरणं शंकरोक्तयः
शरणं भगवद्भक्ताः शरणं हरिनाम च ।

इति

श्रीमत्स्वयंप्रकाशांघ्रिलब्धवेदांतिसत्पदः
महादेवोकरोद्व्याख्यां विष्णोर्नामसहस्रगां ।

(ख)

सुवाणमुनिभूमाने वत्सरे श्रीमुखाभिधे
मार्गासिततृतीयायां नगरे ताप्यलंकृते ।

इति श्रीमद्वेदांतिमहादेवकृता विष्णुनामसहस्रटीकायां व्याख्यां इति शुभों संवत् १८६१ आषाढ़ शु० ७

—:o:—

क्रमसंख्या ५२ (ख)

## प्रारम्भ :-

(श्रीमद्भगवदगीता टीका) ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायककर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः

प्रणम्य भगवत्पादान् श्रीधरादींश्च सद्गुरून्
संप्रदायानुसारेण गीताव्याख्यां समारभे १

भारते सर्ववेदार्था भारतार्थश्च कृत्स्नशः
गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता २

कर्मोपास्यितज्ञानभेदैः शास्त्रं कांडत्रयात्मकं
अन्ये तूपासनाकांडात् तृतीयो नातिरिच्यते ३

तदेवं ब्रह्मविद्भिः वेदे यत्तदुपासते
इतित्श्रुवैव वेद्यस्यादुपास्यादन्यतेरिता ४

इयमष्टादशाध्यायी क्रमात् षटत्रिकेन हि
कर्मोपास्तिज्ञानकांडत्रितयात्मा निगद्यते ।५

तत्र युद्धोद्यमं श्रुत्वौत्सुक्यादग्रिमं वृत्तान्तं बुभुत्सुर्धृतराष्ट्र उवाच धर्मक्षेत्र इति।

(श्रीमद्भगवद्गीता मूल)धृतराष्ट्र उवाच।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः
मामकाः पांडवाश्चैव किमकुर्वंत संजय। १

## समाप्ति :-

(श्रीमद्भगवद्गीता मूल)

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम। ७८



इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगेशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासादितत्त्वनिर्णययोगो नामाष्टादशोध्यायः १८

टीका) यस्मादनंतैश्वर्यो भगवान् तदनुगृहीतोऽर्जुनो युधिष्ठिरपक्षेस्ति अतस्त्वया जयाशा न कार्येत्याह यत्रेति यत्र पक्षे ध्रुवेति सर्वत्र संबध्यते श्रीर्देवहसनादिशोभा विजयः प्रसिद्धः भूतिः ऐश्वर्यं सर्वनियंतृत्वं नीतिर्नयश्च एतत्सर्वं तत्र तस्मिन् पक्षे ध्रुवमिति मम मतिः अतः पांडवैः सह संधिरेव कर्त्तव्य इति भावः ७८

इति श्रीमत्पदवाक्यप्रमाणज्ञमर्यादाधुरंधरवंशावतंस श्रीगोविंदसूनोः श्रीनीलकंठसूरिवर्यस्य कृतौ भारतभावदीपे भीष्मपर्वणि गीतार्थप्रकाशेऽष्टादशोध्यायः १८ संवत् १८६१ ज्येष्ठेमासे कृष्णे पक्षे चतुर्थ्यां चंद्रवासरे लिषतं लालजोमल्ल मिश्र कुरुक्षेत्रांतरकपिस्थलिमध्ये लि० यादृशं पुस्तकं दृष्ट्वा तादृशं लिषतं मया यदि शुद्धविशुद्धं वा मम दोषो न दीयते ।।१।। गौरीशंकराभ्यां नमः गुरुदेवाय नमः

१. इस हस्तलिखित में केवल विष्णुसहस्रनाम तथा भगवद्गीता ही हैं। महाभारत का अन्य कोई अंश नहीं है। परन्तु प्रत्येक पत्र पर पत्रांक लिखने के साथ-साथ "म० भा०" लिखा गया है। इसी से भ्रान्तिवश इसे 'महाभारत' नाम से रजिस्टर में चढ़ाया गया है।

२. विष्णुसहस्रनाम पर महादेव वेदान्ती की टीका है। नीलकण्ठी नहीं।

३. श्रीमद्भगवद्गीता पर नीलकण्ठ सूरि की टीका है। परन्तु यह नीलकण्ठ सूरि सारे महाभारत पर टीका करने वाले नीलकण्ठ से भिन्न प्रतीत होता है। टीका के प्रारम्भ में "तत्र युद्धोद्यमं श्रुत्वौत्सुक्यादग्रिमं वृतान्तं बुभुत्सुर्धृतराष्ट्र उवाच धर्मक्षेत्र इति" इस वाक्य से स्पष्ट प्रतीत होता है कि इस टीकाकार ने भीष्मपर्व के, गीता से पूर्ववर्त्ती, बारह अध्याय देखे ही नहीं हैं। इन्हीं बारह अध्यायों के साथ गीता के १८ अध्याय मिलने से ३० अध्याय का गीतापर्व बनता है।

४. विद्वान् लोगों में एक पुरानी अनुश्रुति चली आ रही है कि जब नीलकण्ठ जी गीता के अतिरिक्त सारे महाभारत पर टीका कर चुके तब

किसीने पूछा कि आपने गीता पर टीका क्यों न की ? तब नीलकण्ठ जी ने उत्तर दिया कि यह मेरी अनधिकार चेष्टा कहलाती ; गीता के रहस्य को श्रीधर स्वामी ही बता सकते हैं । गीता पर टीका देखनी है तो श्रीधरी देखो । इस अनुश्रुति के अनुसार भी गीता पर यह टीका किसी अन्य नीलकण्ठ सूरि की बनाई प्रतीत होती है ।

५. पाठ में लिखाई की अशुद्धियां यत्र-तत्र रह गई हैं ।

६. पुस्तक अच्छी अवस्था में है ।

—:0:—

क्रम संख्या ५३

## शङ्कर—दिग्विजयसार ।

व्यासाचल कविवर विरचित ।
काव्य । दे० ना० लिपि । पत्र-संख्या १०५ ।
पत्र-प्रमाण २६.८×१४.८ ।
पंक्तियां १३ प्रतिपृष्ठ । अक्षर ३४ प्रतिपंक्ति ।
पाठ संख्या २६०० । सम्पूर्ण ।

### प्रारम्भ :-

श्रीगणेशाय नमः ॐ

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणं ।
प्राचीनशंकरजये सारः संगृह्यते स्फुटं ॥१॥

यद्वद्दृधटानां पटलो विशालो
विलोक्यतेऽल्पे किल दर्पणेपि
तद्वन्मदीये लघुसंग्रहेस्मि
न्नुद्वीक्ष्यतां शांकरवाक्यसारः ॥२॥

यथातिरुच्ये मधुरेपि रुच्यु
त्पादाय रुच्यंतरयोजनार्हा
तथेष्यतां प्राक्कविहृद्यपद्ये
ष्वेषापि मत्पद्यनिवेशभंगी ॥३॥



स्तुतोपि सम्यक्कविभिः पुराणैः
कृत्यापि नस्तुष्यतु भाष्यकारः
क्षीराब्धिवासी सरसीरुहाक्षः
क्षीरं पुनः किं चकमे न गोष्ठे ॥४॥

पयोब्धिविवरीसुनिःसृतसुधाभरीमाधुरी
धुरीणभणिताधरीकृतफणावराधीशितुः
शिवंकरसुशंकराभिधजगद्गुरोः प्रायशो
यशो हृदयशोधकं कलयितुं समीहामहे ॥५॥

क्वेमे शंकरसद्गुरोर्गुणगणा दिग्जालकूलंकषाः
कालोन्मीलितमालती परिमलावष्टंभमुष्टिंधयाः
क्वाहं हंत तथापि सद्गुरुकथापीयूषपारंपरी
मग्नोन्मग्नकटाक्षवीक्षणबलादस्ति प्रशस्ताहंता ॥६॥

धन्यंमन्यविवेकशून्यसुजनामन्याब्धिकंन्यानटी
नृत्तोन्मत्तनराधमाधमकथासंमर्दंदुष्कर्दमैः
दिग्धां मे गिरमद्यशंकरगुरुक्रीडासमुद्यद्यशः
पारावारसमुच्चलज्जलभरैस्संक्षालयामि स्फुटं ॥७॥

वंध्यासूनुखरीविषाणसदृशक्षुद्रक्षितींद्रक्षमा
शौर्योदार्यदयादिवर्णनकलादुर्वासनावासितां
मद्वाणीमधिवासयामि यमिनस्त्रैलोक्यरंगस्थली
नृत्यत्कीर्त्तिनटीपटीरपटलीचूर्णैर्विकीर्णैः क्षितौ ॥८॥

पीयूषद्युतिखंडमंडनकृपारूपांतरश्रीगुरु
प्रेमस्थेमसमर्हणार्हमधुरव्याहारसूनोत्करः
प्रौढौयं नवकालिदासकवितासंतानसंतानको
दद्यादद्यसमुद्यतस्सुमनसामामोदपारंपरीं ॥९॥

सामोदैरनुमोदिता मृगमदैरानंदिता चंदनै
मंदारैरभिनंदिता प्रियगिरा काश्मीरजैः स्मेरिता
वागेषा नवकालिदासविदुषो दोषोज्झिता दुष्कवि
व्रातैर्निष्करुणैः क्रियेत विकृता धेनुस्तुरुष्कैरिव ॥१०॥

यद्वादीनदयालवः सहृदयाः सौजन्यकल्लोलिनी-
दोलांदोलनखेलनैकरसिकस्वांतास्समंतादमी ।
संतस्संति परोक्तिमौक्तिकजुषः किं चिंतयानंतया
यद्वा तुष्यति शंकरः परगुरुःकारुण्यरत्नाकरः ॥११॥

उपक्रम्य स्तोतुं कतिचन गुणान् शंकरगुरोः
प्रभग्नाः श्लोकार्धे कतिचन तदर्धार्धरचने
अहं तुष्टूषुस्तानहह कलये शीतकिरणं
कराभ्यामाहर्त्तुं व्यवसितमतेः साहसिकतां ॥१२॥

तथाप्युज्जृम्भंते मयि विपुल दुग्धाब्धिलहरी
लसत्कल्लोलालीलसितपरिहासैकरसिकाः
अमी मूकान्वाचा लपितुमपि शक्ता यतिपतेः
कटाक्षाः किं चित्रं भृशमघटिताभीष्टघटने ॥१३॥

अस्मज्जिह्वाग्रसिंहासनमुपनयतु स्वोक्तिधारामुदारा
मद्वैताचार्यपादस्तुतिकृतसुकृतोदारता शारदांबा
नृत्तन्मृत्युंजयोच्चैर्मुकुटतटकुटीनिस्रवत्संस्रवंती
कल्लोलोद्वेलकोलाहलमदलहरीखंडिपांडित्यहृद्यां ॥१४॥

क्वेदं शंकरसद्गुरोः सुचरितं क्वाहं वराकी कथं
निर्बध्नासि चिरार्जितं मम यशः किं मज्जयस्यबुधौ
इत्युक्त्वा चपलां पलायितवतीं वाचं नियुंक्ते बलात्
प्रत्याहृत्य गुणस्तुतौ कविगणः चित्रं गुरोर्गौरवं ॥१५॥

रूक्षैकाक्षरवाङ्निघंटुशरणैरौणादिकप्रत्यय
प्रायैर्हंतयङन्तदंतुरतरैं दुर्बोधदूरान्वयैः
क्रूराणां कवितावतां कतिपयैः कष्टेन कृष्टैः पदै
र्हा हास्याद्वशगा किरातविततेरेणीव वाणी मम ॥१६॥

नेता यत्रोल्लसति भगवत्पादसंज्ञो महेशः
शांतिर्यत्र प्रचकति रसः शेषवानुज्ज्वलाद्यैः
यत्राविद्याक्षतिरपि फलं तस्य काव्यस्य कर्त्ता
धन्यो व्यासाचलकविवरस्तत्कृतिज्ञाश्च धन्याः ॥१७॥



तत्रादिम उपाद्घातो द्वितीये तु तदुद्भवः
तृतीये तत्तदमृतांधोवतारनिरूपणम् ॥१८॥

महतानेहसा यैषा संप्रदायागता गता
तस्याः शुद्धात्मविद्यायाः षष्ठे सर्गे प्रतिष्ठितिः ॥२०॥

तद्व्यासाचार्यसंदर्शविचित्रं सप्तमेस्थितं
स्थितोष्टमे मंडनार्यसंवादो नवमे मुनेः ॥२१॥

वाणीसाक्षिकसार्वज्ञनिर्वाहोपायचिंतनं
दशमे-योगशक्तयाभूपतिकायप्रवेशनं ॥२२॥

बुद्धा मीनध्वजकलां तत्प्रसंगप्रपंचनं
सर्ग एकादशे तूग्रभैरवाभिधनिर्जयः ॥२३॥

द्वादशे हस्तधात्र्यार्यत्रोटकोभयसंश्रयः
वार्त्तिकांतब्रह्मविद्याचालनं तु त्रयोदशे ॥२४॥

चतुर्दशे पद्मपादतीर्थयात्रानिरूपणं
सर्गे पञ्चदशे तूक्तं तदाशाजयकौतुकं ॥२५॥

षोडशे शारदापीठवासस्तस्य महात्मनः
इति षोडशभिः सर्गैः व्युत्पाद्या शांकरी कथा ॥२६॥

## समाप्ति :–

इति कृतसुरकार्यं नेतुमाजग्मुरेनं
रजतशिखरिश्रृंगं तुँगमीशावतावरं
विधिशतमखचंद्रोपेंद्रवाय्वग्निपूर्वाः
सुरनिकरवरेण्याः सर्षिसंघाः ससिद्धाः ॥३॥

विद्युद्वल्लीनियुतसमदारब्धयुद्धैर्विमानैः
संख्यातीतैः सपदि गगनाभोगमाच्छादयंतः
स्तुत्वा देवं त्रिपुरमथनं ते यतीशानवेषं
मंदारोत्थैः कुसुमनिचयैरब्रुवन्नर्चयन्तः ॥४॥

भवानाद्यो देवः कवलितविषः कामदहनः
पुरारातिर्विश्वप्रभवलयहेतुस्त्रिनयनः
यदर्थं गां प्राप्तो भवमथन वृत्तं तदधुना
तदायाहि स्वर्गं सपदि गिरिशास्मत्प्रियकृते ।।५।।

उन्मीलद्विनय (न) प्रधानसुमनोवाक्यावसाने महा
देवे संभृतसंभ्रमे निजपदं गंतुं मनः कुर्वति
शैलादिप्रमुखैः परिष्कृतवपुस्तस्थौ पुरस्तत्क्षणा
दुक्षा शारदवारिमुग्धवलिमाहंकारहुंकारकृत् ।।६।।

इंद्रोपेंद्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानःप्रसूनैः
दिव्यैरभ्यर्च्यमानः सरसिरुहभवादत्तहस्तावलंबः
आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचंद्रावतंसः
शृण्वन्नालोकशब्दं समुदितमृषिभिर्धाम नैजं प्रतस्थे ।।१०७।।

इति श्रीमाधवीये तच्छारदापीठवासगः
संक्षेपशंकरजये सर्गः पूर्णोपि षोडशः ।।१६।।

प्रारम्भ में "प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणाम्" और अन्त में "इति श्री माधवीये" देखते हुए इसके रचयिता सायणाचार्य प्रतीत होते है। सायणाचार्य जी ने अनेक ग्रंथों की रचना अपने बड़े भाई माधवाचार्य के नाम पर की है। इसी लिए इसे भी माधवीय कहा गया प्रतीत होता है। इसी लिए यत्येक सर्ग की समाप्ति पर भी पुष्पिका में "माधवीये" पद का प्रयोग हुआ है। प्रारम्भ में (१७ वें श्लोक में) रचयिता का नाम "व्यासाचलक विवरः" दिया गया है। यह भी किसी प्रकार से सायणाचार्य का ही नाम है। इसी प्रकार से श्लोक ९ तथा १० में कवि ने अपने को नव कालिदास भी कहा है।

२. पुस्तक का वास्तविक नाम "संक्षेपशंकरजय" है। ऐसा ही प्रत्येक सर्ग के अन्त में लिखा गया है। परन्तु आवरण-पृष्ठ पर "शंकर-दिग्विजयसार" नाम लिखा है। इस लिए संग्रहालय के काग़ज़-पत्रों में इसका नाम "शङ्करदिग्विजयसार" ही रक्खा गया है।

३. प्राठ प्रायः शुद्ध है।



४. पुस्तक अच्छी अवस्था में है।

५. ग्रन्थ क्रम—संख्या ६९ भो नाम-भेद से यही-ग्रन्थ है।

—:o:—

क्रमसंख्या ५४

## तत्त्वप्रदीपिका।

नयनप्रसादिनी टीका सहित।
ग्रन्थकार—चित्सुखमुनिः।
टीकाकार—प्रत्यक्स्वरूप।
वेदान्त। दे० ना० लिपि। पत्र-संख्या ५१६।
पत्र-प्रमाण ३०.००×१४.६ सैं० मी०।
पंक्तियां १३ प्रतिपृष्ठ। अक्षर ४१ प्रतिपंक्ति।
पाठसंख्या १७१८९। सम्पूर्ण।

## प्रारम्भ :—

(टीका) यन्नित्यं निरवग्रहस्वमहिमामेयस्वभावं महा—
मायावेशवशाद्व्यवर्त्तत वियद्वाय्वग्न्यबुर्वीमुखैः।
भावैस्तत्तदनंतविभ्रममयैर्विध्वस्तभेदोद्भवं
निर्धूतावधिबोधमोदजलधिं वंदे महीयो महः ।।१।।

उन्निद्रशुभ्रसरसीरुहसन्निषण्णां
निर्गच्छदच्छरुचिनिर्जितचंद्रकांति
हारोज्ज्वलां लिपितनुं स्फटिकाक्षकुंभ
मुद्राक्षपुस्तककरां प्रणमामि वाणीं ।।२।।

254087

अविरलविगलितमदजल
विलुलितमत्तालिमालामनुलंबः
—त्रिपुलकपोलफलको
दलयतु लंबोदरो दुरितं ।।३।।

यद्विद्याधवलैर्बिभर्त्ति विबुधैः सर्वादिवापीन्दुमु—
न्मीलत्कैरवकोरकाकुलरुचिं विश्वम्भरेयं भृता
घोराज्ञानदुरंतपंकनिकरप्रोत्सारिविद्यानदी—
मूलं नौमि मुनींद्रमन्वहमहं विद्यागिरिं तं गुरुं ॥४॥

यत्पादपावनसरोजरजः परागै
रेते विनेयनिवहा विरजस्त्वमायुः
सत्यप्रकाशपरिशुद्धनिजानुभावं
प्रत्यक्प्रकाशमभिनौमि गुरुं यतीन्द्रं ॥५॥

उद्यद्विद्यासुरसरिदियं निःसृता यत्सकाशात्
यत्पादाब्जं सकलविबुधोत्तंसलीलां बिभर्त्ति
हंसानां यद्विमलबहुवाग्जीवनं जीवनं तं
वंदे विद्यागुरुमविरतं मानसं तीर्थमार्यं ॥६॥

अविनश्वररुचितत्त्वप्रदीपिकालोकनार्थिनां क्रियते
अज्ञानतिमिरभेत्त्री मानसनयनप्रसादिनी टीका ॥७॥

दोषत्वमुज्ज्वलगुणा अपि यान्ति येषु
तैरुन्नतैः किमथवेह तिरस्कृतैः किं
दोषोपि येषु गुणतामुपयाति भूयां–
स्तेभ्यो नमोस्तु सततं भुवि सज्जनेभ्यः ॥८॥

(मूल) श्रीगणेशाय नमः

स्तंभाभ्यंतरगर्भभावनिगदव्याख्याततद्वैभवो
यः पांचाननपांचजन्यवपुषा व्यादिष्टविश्वात्मतः
प्रह्लादाभिहितार्थतत्क्षणमिलद्दृष्टप्रमाणं हरिः
सोव्याद्वः शरदिंदुसुंदरतनुः सिंहाद्रिचूडामणिः ॥१॥

ज्योतिर्यद्दक्षिणामूर्त्तिव्यासशंकरशब्दितम्
ज्ञानोत्तमाख्यं तद्वंदे सत्यानंदपदोदितम् ॥२॥

विप्रतिपत्तिजातध्वांतध्वंसप्रगल्भवाचला
क्रियते चित्सुखमुनिना प्रत्यक्तत्वप्रदीपिका विदुषा ॥३॥



प्रमाणनखनिर्भिन्नमहामोहामरारये
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥४॥

अथ कोयं स्वप्रकाशशब्दार्थः किं स्वश्चासौ प्रकाशश्च स्वप्रकाशः स्वस्य स्वयमेव प्रकाश इति वा सजातोय प्रकाशाप्रकाश्यत्व वा स्वसत्तायां प्रकाशव्यतिरेकविरतत्वं वा ।

## समाप्ति :–

(मूल) न च साधक एवावस्थाविशेषं प्राप्तः स्थितप्रज्ञो गुणातीतश्च प्रजहाति यदा कामा नित्याद्यभिहितविशेषणानां तत्रानुपपत्तेः न हि सर्वं कामानां विमोकः परमात्मसाक्षात्कारमन्तरेणोपपन्नः रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्त्तत इति स्मरणात् यदा सर्वे प्रमुच्यंते कामा येस्य हृदि श्रिताः अथ मत्योर्मृतो भवत्यत्र ब्रह्मसमश्नु इति श्रुतेश्च तदेवं श्रुतिस्मृति पुराणादिष्वाघुष्यमाणा जीवन्मुक्तिः प्रद्वेषमात्रेण नापलपितुं शक्यत इति सिद्धं इति श्रीगौडेश्वराचार्य परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकश्रोचित्सुखमुनिविरचितायां तत्त्वप्रदीपिकायां चतुर्थः परिच्छेदः ४ ।

(टीका) साधकः फलायोपात्तसाधनः अवस्था विशेषं उपसर्जनीभूतमनोनाशवासनाक्षयाभ्यासशालित्वरूपं अंतस्करणधर्माणां कामानां निवृत्तिं प्रति विविक्तात्मसाक्षात्कार एव हेतुरित्येतदपि तत्रैव दर्शितमित्याह रसेति रसः कामः दृष्ट्वा साक्षात्कृत्य एतदेव श्रुतिरारण्यको प्रकाशयतीत्याह यदेति फलितमाह तदेवमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यक्स्वरूपभगवतः कृतौ तत्त्वप्रदीपिकाटीकायां नयनप्रसादिन्यां चतुर्थः परिच्छेदः ॥

१—पाठ शुद्ध है ।

२—पुस्तक का पूरा नाम प्रत्यक्तत्त्वप्रदीपिका है । विद्वान लोगों में इसका प्रचलित नाम 'चित्सुखी' है । इसी लिए प्रत्येक पत्र पर पत्राङ्क के साथ "चि० टी०" (चित्सुखीटीका) लिखा गया है ।

३—पुस्तक अच्छी अवस्था में है ।

४—प्रकाशित हो चुकी है ।

क्रमसंख्या ५५

## चन्द्रालोकप्रकाशः (टीका)।

प्रद्योतन भट्टाचार्य विरचित।
अलङ्कार शास्त्र। दे० ना० लिपि। पत्र-संख्या १५।
पत्र-प्रमाण ३२.५×१४.६ सैं०मी०।
पंक्तियां १३ प्रतिपृष्ठ। अक्षर ३८ प्रतिपंक्ति।
पाठ-संख्या ४६३। अपूर्ण।

### प्रारम्भ :—

ॐ श्री गणेशाय नमः
पृथ्वी पृथ्वी न पद्भ्यां न च वहति नभस्तुंगतामुत्तमांगात्
पाणिप्रक्षेपयोग्यं दधति दश दिशः किंचनैवावकाशं
कुर्यां किं क्वानुकुर्य्यां त्रिपुरविजयिनस्तांडवे चिन्तयेत्थं
व्यग्रस्सगर्गादिहेतुस्त्रिदशगणनुतः श्रेयसे भैरवोस्तु ।।१।।

मम सहजविरोधी निर्जितोऽनेन भित्त्वा
धनुरिति बहुला यत्प्रीतिभाजा स्मरेण
स्रगिव कुवलयानामादरेणोपनीता
जयति जनकजाया राघवेपांगदृष्टिः ।।२।।

अस्य स्थितौ तु नगरी महतोयोध्या भवत्यखिला
इति रघुवंशादधिको जयति वंद्येलाभिधो वंशः ।।३।।

देवपतेरिव शक्तिर्यस्य जये भूभृतां प्रथिता
श्रीवीरसिंहदेवस्तत्र धरामण्डले जातः ।।४।।

दशरथतो रघुपतिरिव तस्मादिह वीरभानुभूपालः
आबद्धधर्मसेतुर्जगति समद्रेसुमुद्भूतः ।।५।।

तत्तनयो नयनिर्मलकीर्त्तिस्वर्निम्नगाकमलं
श्रीरामचंद्रदेवाद्भूषणहन्ता समुल्लसति ।।६।।

श्रीवीरभद्रदेवो वैरिवधूगीतसत्कीर्त्तिः
जयति तदीयस्तनयः कविगोष्ठीर्देवतारामः ।।७।।



क्रियते तस्य निदेशाच्चंद्रालोकप्रकाशोयं
शरदागम इति विदितो भट्टाचार्येण यत्नेन ।।८।।

विघ्नविध्वंसकामनया कृतं मंगलं शिष्यशिक्षायै निबध्नाति उच्चैरिति।

(मूल) ॐ
उच्चैरस्यति मंदतामरसतां जाग्रत्कलंकैरव—
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे
धृष्टोद्यन्मदनाशनार्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खंडपरशोर्वाग्देवता दीव्यतु ।।१।।

हंहो चिन्मयचित्तचंद्रमणयः संवर्द्धयध्वं रसान्
रे रे स्वैरिणि निर्विचारकविते मास्मत्प्रकाशी भवः
उल्लासाय विचारवीचिनिचयालंकारवारांबुधेः
चंद्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृतो ।।२।।

### समाप्ति :—

(मूल) कतवं व्यज्यमानत्वे व्याजाद्यैर्निन्हुतेः पदैः
निर्यांति स्मरनाराचा· कान्तादृक्पातकैतवात् ।।२७।।

(टीका) कैतवमाह कैतवमिति व्याजाद्यैः पदैः
रपह्नुतेर्व्यंज्यमानत्वे कैतवापह्नुतिरिति उदाहरणं
निर्यांतीति अत्र कैतवादित्यनेन दृक्पातनिह्नवः ।।२७।।

१—इसमें मूल चन्द्रालोक तथा उसपर प्रद्योतन भट्टाचार्य की टीका चन्द्रालोकप्रकाश है। इसी टीका का एक नाम शारदागम भी है।
२—चार मयूख सम्पूर्ण हैं और पांचवें के केवल २७ श्लोक हैं।
३—लिखाई शुद्ध है।
४—पुस्तक अच्छी अवस्था में है।
५—कई बार प्रकाशित हो चुकी है।

—:0:—

क्रमसंख्या २६

## जैमिनिन्यायमाला।

माधवाचार्यविरचित।
मीमांसा शास्त्र। दे० ना० लिपि। पत्र-संख्या ८६।
पत्र-प्रमाण ३२.००×१३.८ तथा ३५.००×१५.४ सैं०मी०।
पंक्तियां १५ प्रतिपृष्ठ। अक्षर ३९ प्रतिपंक्ति।
पाठ-संख्या ३१४४। अपूर्ण।

## प्रारम्भ :-

श्रीवैकुंठाय नमः
वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥१॥

युक्ति मानवतीं विदं स्थिरमतिर्भेदे विशेषार्थभा—
गाप्तोहः क्रमकृत्प्रयुक्तिनिपुणः शलाध्यातिदेशोन्नतिः
नित्यस्फूर्त्यधिकारवान् गतसदावाधः स्वतंत्रेश्वरो
जागर्त्तिश्रुतिमत्प्रसंगचरितः श्रीबुक्कणक्ष्मापतिः ॥२॥

यद्ब्रह्म प्रतिपाद्यते प्रगुणयत्तत्पंचमूर्त्तिप्रथां
तत्रायं स्थितिमूर्त्तिमाकलयतिः श्रीबुक्कणक्ष्मापतिः
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्त्तिस्त्वनिग्राहिका
तेनासा स्वगुणैरखंडितपदं सार्वज्ञमुज्जृम्भते ॥३॥

इंद्रस्यांगिरसो नलस्य सुमतिः शैव्यस्य मेधातिथि –
र्धौम्यो धर्मसुतस्य वैन्यनृपतेः सौजातिमेगौंतमिः
प्रत्यग्दृष्टिररुंधतीसहचरो रामस्य पुणयात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मंत्री तथा माधवः ॥४॥

स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः
अकरोज्जैमिनिमते न्यायमालां गरीयसीं ॥५॥

तां प्रशस्य सभामध्ये वीरश्रीबुक्कभूपतिः
कुरु विस्तरमस्यास्त्वमितिमाधवमादिशत् ॥६॥



स भव्यां भारतीतीर्थयतीन्द्रचतुराननात्
कृपामव्याहतां लब्ध्वा परार्ध्यप्रतिमोभवत् ॥७॥

निर्माय माधवाचार्यो विद्वदानन्ददायिनीं
जैमिनीयन्यायमालां व्याचष्टे बालवुद्धये ॥८॥

न्यायमालाया आदौ स्वकीयग्रंथत्वद्योतनाय स्वमुद्रारूपमनेकार्थगर्भं देवतानमस्कारप्रातिपादकं श्लोकं पठति वागीशाद्या इति—

## समाप्तिः–

त्रयोविंशाधिकरणमारचयति शक्यायने पुरोडाशस्तरसा इति मांसता स(व)नीये वा सर्वत्र। सर्वत्र नवनीतवत् तरसाः सवनीयाः स्युरिति तत्संनिधिः श्रुतः पुरोडाशस्य मांसत्वं तेष्वेवातो नियम्यते षट्त्रिंशत्संवत्स-रेष्वनुष्ठेयं शाक्यायागः पनं तत्र श्रूयते संस्थिते संस्थितेहनि गृहपति-र्मृगयां याति स यान् मृगान् हन्ति तेषां तरसा सवनीयाः पुरोडाशाः भवंति तत्र यथा नवनीतं सर्वेष्वंगेषु निविष्टं तथा मांसत्वमपि सर्वेषु पुरोडाशेषु निविशत इति चेत् मैवं तदा हि पुरोडाशास्ते तरसा इति वचनव्यक्तौ व्यवहितान्वयः स्यात् तरसाशब्द-पुरोडाशशब्दयोर्मध्ये सवनीयशब्देन व्यवधानात् इह तु तरसा सवनीया इत्यनयोः संविधि श्रूयते तथा सति ये सवनीयास्ते तरसा इत्यनेन संनिध्यनुगृहोतेन वाक्येन मांसत्वं सवनीयपुरोडाशेष्वेव नियम्यते।

इति माधवीये जैमिनिन्यायमालाविस्तरे तृतीयाध्यायस्याष्टमः पादः ॥८॥

१ – लिखाई प्रायः शुद्ध है।
२—यह पुस्तक तृतीयाध्याय के अष्टम पाद तक ही है।
३—बीच में क्रमाङ्क ४ से ७ तक के पत्र नहीं हैं।
४—पुस्तक दो हाथों की लिखाई में है। एक द्वितीयाध्याय के चतुर्थ पाद तक तथा दूसरी तृतीयाध्याय के प्रारम्भ से अष्टम पाद की समाप्ति पर्यन्त।
५—पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ५७

## राजमार्त्तण्डः ।

भोजराजविरचितः ।
योगशास्त्र । दे० ना० लिपि । पत्र-संख्या ६१ ।
पत्र-प्रमाण ३२.५×१६.५ सैं० मी० ।
पंक्तियां ११ प्रतिपृष्ठ । अक्षर ३२ प्रतिपंक्ति ।
पाठसंख्या १३४२ । पूर्ण ।

### प्रारम्भ :–

ॐ स्वस्ति श्रीगणेशाय नमः ।
ॐ नमो भगवते वासुदेवाय ।। ॐ
देहार्धयोगः शिवयोः स श्रेयांसि तनोतु वः ।।
दुष्प्राप्यमपि यत्स्मृत्या जनः कैवल्य मश्नुते ।।१।।

त्रिविधान्यपि दुःखानि यदनुस्मरणान्नृणां ।।
प्रयांति सद्यो विलयं तं स्तुमः शिवमव्ययं ।।२।।

पतंजलिमुनेरुक्तिः काप्यपूर्वा जयत्यसौ ।।
पुंप्रकृत्योर्वियोगोऽपि योग इत्युदितो यया ।।३।।

जयंतु वाचः फणिभर्त्तुरात्तर स्फुरत्तमः स्तोमनिशाकरत्विषः
विभाव्यमानाः सततं मनांसि याः सतां सदानंदमयानि कुर्वते ।।४।।

शब्दानामनुशासनं विदधता पातंजले कुर्वता
वृत्तिं राजमृगांकसंज्ञमपिच व्यातन्वता वैद्यके
वाक्चेतोवपुषाम्मलः फणभृतां भर्त्रेव येनोद्धृत
स्तस्य श्रीरणरंगमल्लनृपतेर्वाचो जयंत्युज्ज्वलाः ।।५।।

दुर्बोधं यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः ।।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतृणामिति वस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः ।।६।।



उत्सृज्य विस्तरमुदस्य विकल्पजालं
फल्गु प्रकाममवधार्य च सम्यगर्थान् ।।
अन्तः पतंजलिमते विवृतिर्मयेय-
मातन्यते बुधजनप्रतिपत्तिहेतुः ।।७।।

(मूल)—अथ योगानुशासनं

(टीका) अनेन सूत्रेण शास्त्रस्य संबंधाभिधेयप्रयोजनान्याख्यायन्ते । अथ शब्दोधिकारद्योतको मंगलार्थश्च ।

### समाप्ति :–

(मूल) पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः
कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति ।।३३।।

(टीका) कैवल्यनिर्णयाय दशभिः सूत्रैः क्रमेणोपयोगिनोऽर्थान-भिधाय शास्त्रांतरेष्वप्येतदेव कैवल्यमुपपन्नमित्युपपाद्य कैवल्यस्वरूपं निर्णीतमिति व्याकृतः कैवल्यपादः

सर्वे यस्य वशाः प्रतापवसतेः पादांतसेवाश्रिता
विभ्रश्यन्मुकुटेषु मूर्धसु दधत्याज्ञां धरित्रीभृतः
यद्वक्त्रांबुजमाप्य गर्वमसमं वाग्देवतापि श्रिता
स श्रीभोजमहीपतिः फणिपतेः सूत्रेषु वृत्तिं व्यधात् ।।१।।

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचितायां
राजमार्त्तण्डाभिधायां पातंजलयोगशास्त्रे
सूत्रवृत्तौ कैवल्यपादश्चतुर्थः ४ समाप्तोयं
ग्रंथश्चेति शुभम् लिखितं पंडित काश्मीरी
रामचन्द्रेन मध्य कैथल् संवत् १८७३ ।

१—इस पुस्तक में पातञ्जल योग-सूत्र तथा उन पर भोजविरचित राजमार्त्तण्ड नामक वृत्ति है ।
२—पाठ प्रायः शुद्ध है ।
३—पुस्तक अच्छी अवस्था में है ।
४—प्रकाशित हो चुकी है ।

—:o:—

क्रमसंख्या ५८

## तत्त्वपञ्चाशिका।

कविपतिविरचिता।
ज्यौतिष। देवनागरी लिपि। पत्र-संख्या १०।
पत्र-प्रमाण ८.०५×५.०० सैं० मी०।
पंक्तियां १० प्रतिपृष्ठ। अक्षर २६ प्रतिपंक्ति।
पाठ संख्या १६३। सम्पूर्ण।

### प्रारम्भ :-

श्रीगणेशाय नमः।
कस्तूरीकोशभासः कमलभवकरः
कौस्तुभांकः कृपालुः
कालिंदीकूलकेलिः कुलिशकरकृणुः
कामिनीकंठमालः
कंसारिः कैटभारिररिकुलकदनः
कौतयानः करालः
कल्पस्थानं कवीनां कलयतु कुशलं
केशवः केशिकालः ॥१॥

नत्वा कृष्णांघ्रियुग्मं यतिपरमपदं रम्यविश्वैकरूपं
विश्वानंदैकमूलं भवभयहरणं कामधेनुं कृपालुं
श्रीयुक्ता गौड़विप्रा हरिरसकवयो हेतवे सज्जनानां
कुर्मः सिद्धांतसारां सुरमणिमतजां तत्त्वपंचाशिकां तां ॥२॥

आरक्तौ भानुभौमौ भृगुजहिमकरौ शुक्लिनौ ज्ञः शुकाभः
स्वर्णाभो देवमंत्री रविजविधुतुदौ चाथ नीलांजनाभौ
भूपोऽर्को ग्लौथ राज्ञी गुरुसितसचिवौ रोहिणेयः कुमारः
भूजातो दंडकर्त्ता रविसुततिमिरौ प्रेष्यकौ भाषितौ ज्ञैः ॥३॥

### समाप्ति :-

नारीणां जन्मकाले कुजशनितमसाः कोणकेंद्रेषु शस्ताः
चंद्रोस्तेषु प्रशस्तो बुधसितगुरवः सर्वभावेषु शस्ताः



लानेशः कामभावे मदनगृहपतिर्लाभभावे वलस्थो
लाभेशः पुत्रभावे वदति मुनिवरो वहुपुत्रा भवन्ति
इति श्रीकविपतिविरचिता तत्त्वपंचाशिका
संपूर्णा

१—इसका नाम तो पञ्चाशिका है परन्तु पुस्तक में ५५ स्रग्धाराएं हैं।
२—अनेक स्थानों पर छन्दोंभङ्ग होता है। परन्तु वह लिपिकारों की अशुद्धियों के कारण भी हो सकता है।
३—पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसख्या ५९

## प्रबोधचन्द्रिका।

वैजलभूपतिविरचिता।
व्याकरण। दे० ना० लिपि। पत्र-संख्या १९
पत्र-प्रमाण २६.२×१३.०० सैं० मी०।
पंक्तियां १२ प्रतिपृष्ठ। अक्षर ३६ प्रतिपंक्ति।
पाठ-संख्या ५६२। सम्पूर्ण।

### प्रारम्भ :—

श्रीगणेशाय नमः
हरिहरगुरुभक्तः सर्वलोकानुरक्तः
त्रिभुवनगतकीर्त्तिः कान्तिकन्दर्प्पमूर्त्तिः
रणरिपुगणकालो वैजलः क्षोणिपालो
जगति जयति दाता सर्वकर्म्मावधाता ॥१॥

चंद्रावतीवदनचंद्रचकोरविक्रम-
श्चादित्यभूपतनयो नयतंत्रवेत्ता
चौहानवंशतिलकः पटनाधिनाथो
राजा परं जयति वैजलदेव नामा ॥२॥

रामो मेऽभिहितं करोतु सततं रामं भजे सादरं
रामेणापहृतं समस्तदुरितं रामाय दत्तं धनुः
रामान्मुक्तिरभीप्सिता सरभसं रामस्य दासोस्म्यहं
रामे रंजतु मे मनः करुणया भो राम मां पालय ।।३।।

श्रीमद्वैजलदेवेन रामभक्तिरतात्मना
इति चिंतितमेकांते कदाचित्तिष्ठता सता ।।४।।

अस्थि वज्रमयं यस्य यस्य चर्म च वर्म्मवत्
स दधीचिः स कर्णो वा नातिष्ठत्सुचिरं भुवि ।।५।।

न संप्रति शरीराणि न राज्यानि धनानि च
तेषां स्वर्गगतानां हि कीर्त्तिर्जागर्ति भूतले ।।६।।

पद्मिनीपत्रजलवत्संसारे सर्वमस्थिरम्
कीर्त्तिरक्षरसंबद्धा स्थिराभवति भूतले ।।७।।

इह लोके सुखं येन परलोकेऽपि जायते
तदेव प्रत्यहं कर्म्म कर्त्तव्यं दूरदर्शिना ।।८।।

संसारांभोधितरणं रामनामानुकीर्त्तनम्
रामनामान्विता तस्मात्प्रक्रिया क्रियते मया ।।९।।

बालकानां प्रबोधाय तोषाय विदुषामपि
आकल्पमपि संसारे सुकीर्त्यवस्थापनाय च ।।१०।।

## समाप्ति :—

रामो रम्यं वनं जग्मे विष्णो रोचिः प्रीयताम्
गौरस्येत्यादि बोद्धव्यं परत्वाच्च मनोरथः ।।६८।।

व्यंजने चैष सपरो लोप एव विधीयते
स चैष नञ्समासे कप्रत्यये विधीयते ।।६९।।

असौ श्रमोप्यनेषश्च सक एषक एव हि
ग्रंथस्य गौरवभिया मया नोक्तं सविस्तरम् ।।७०।। इति ।



प्रबोधचंद्रिकायां च कृतौ वैजलभूपतेः
एष विशेषतः सुष्ठु समाप्ता संधिचंद्रिका ।।७१।।

इति श्रीप्रबोधचंद्रिका समाप्ता

१—पाठ प्रायः शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।
३—जबलपुर से प्रकाशित हो गई है ।

—:o:—

क्रमसंख्या ६०

## बदरी माहात्म्य।

वेदव्यासमुनिविरचित ।
माहात्म्यग्रन्थ । दे० ना० लिपि । पत्र-संख्या २० ।।
पत्र-प्रमाण २५.८×११.५ सें० मी० ।
पंक्तियां ८ प्रतिपृष्ठ । अक्षर ३८ प्रतिपंक्ति ।
पाठसंख्या ४७० । अपूर्ण ।

## प्रारम्भः —

श्रीगणेश्वराय नमः ।। श्री बदरीश्वराय नमः ।।
बन्दे श्रीनारसिंहं गरुड़सुरमुनिक्रोडकेदारगंगा-
मार्क्कंडेयाग्नितीर्थंद्रविणादभगवत्पाददुर्गागणेशान् ।।
घंटाकर्णोद्भवश्रीनरनगबदरीनाथनारायणाख्य
ब्रह्मप्रह्लादयोगीश्वरकमलपदश्रीनृसिंहांश्च भक्त्या ।।१।।

धर्मज्ञानविभक्तीनां मार्गं श्रुत्वा सुविस्तरं ।।
सनत्कुमाराद्देवर्षिः पप्रच्छ पुनरेवतम् ।।२।।

बदर्य्याश्रममाहात्म्यं सारात्सारतरं महत् ।।
श्रद्धया परया भक्त्या नत्वा चैव पुनः पुनः ।।३।।

श्री नारद उवाच ॥
दयासिंधो महाविद्वन्सर्वलोकहितेच्छाया ॥
वक्तुमर्हसि मत्प्रीत्यै बदर्य्याश्रमवैभवम् ॥४॥

## समाप्तिः—

इति श्रीसनत्कुमारसंहितायामूर्ध्व भागे श्रीबदरीमहात्म्ये नवमोध्यायः ॥६॥

श्री सनत्कुमार उवाच ॥
अथातः संप्रवक्ष्यामि बदरीखंडमंडिते ॥
आश्रमे दशधा भिन्ना यात्रा पर्वणि पर्वणि ॥१॥

यात्राभिर्बदरीनाथो मुक्ति मुक्ति च यच्छति ॥
वांछितानामिहार्थानां नूनं दाता जगद्गुरु: ॥२॥

अंत्या——

१—लिखाई शुद्ध है ।

२—पुस्तक अच्छी अवस्था में है ।

३—नवम अध्याय तक पूरा है। दशम अध्याय के केवल दो श्लोक हैं। इससे आगे के पत्र नहीं हैं ।

—:o:—

क्रमसंख्या ६१

## कुमारसम्भव ।

कालिदासविरचित ।
काव्य । दे० ना० लिपि । पत्र-संख्या ४० ।
पत्र-प्रमाण २६.५×१५.०० सें० मी० ।
पंक्तियां ९ प्रतिपृष्ठ । अक्षर २७ प्रतिपंक्ति ।
पाठसंख्या ६०० । केवल सात सर्ग ।



## प्रारम्भः—

ॐ श्रीगणेशाय नमः
अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी विगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥१॥

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहृदक्षे
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ।२।

## समाप्तिः—

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः
अपि शयनसखीभ्यो दत्तवाचं कथंचित्
प्रथममुखविहारै र्हासयामास गूढं ॥९६॥

इति कुमार संभवमहाकाव्ये कालिदासकृतौ उमापरिणयो नाम सप्तमः सर्गः ॥७॥

याहशं पुस्तकं हष्ट्वा ताहशं लिख्यते मया
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥१॥

१—पाठ शुद्ध है ।

२—पुस्तक अच्छी अवस्था में है ।

क्रम-संख्या ६२

## भागवतमाहात्म्य ।

वेदव्यासमुनिविरचित ।
माहात्म्य । दे० ना० लिपि । पत्र-संख्या ४६ ।
पत्र-प्रमाण २७.२×१३.५ सें० मी० ।

पंक्तियां ९ प्रतिपृष्ठ। अक्षर २१ प्रतिपंक्ति।
पाठसंख्या ५६७। सम्पूर्ण।

**प्रारम्भः—**

श्रीगणेशाय नमः ॥ श्रीभागवतमाहात्म्यं पद्मपुराणस्येदं।
यं प्रव्रजन्तमनुपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव ॥
पुत्रेति तन्मयतया तरवोभिनेदु-
स्तं सर्वभूतहृदयं मुनिमानतोस्मि ॥१॥

नैमिषे सूतमासीनमभिवाद्य महामतिं ॥
कथामृतरसास्वादे कुशलः शौनकोऽब्रवीत् ॥२॥

शौनक उवाच ॥
अज्ञानध्वांतविध्वंसं कोटिसूर्यसमप्रभं ॥
सूताख्याहि कथासारं मम कर्णरसायनं ॥

भक्तिज्ञानविरागाप्तो विवेको वर्द्धते कथं ॥
मायामोहनिरासश्च वैष्णवैः क्रियते कथं ॥६॥

**समाप्तिः—**

यः पादमप्यत्र पठेत्स पापा-
द्विमुच्यते जन्मसहस्रजातात् ॥
दिने दिने पापचयं प्रकुर्वन्
पठन्नरः श्लोकमपीह भक्त्या ॥१०३॥

यो नरः शृणुयाद्वापि श्रावयेद्वापि भक्तितः ॥
इह लोके सुखं प्राप्ति परलोकेपि मोक्षदा ॥१०७॥

अश्वमेधसहस्राणि वाजपेयशतानि च ॥
कन्याकोटिसहस्राणि फलमेतच्च दानतः ॥१०८॥

इति श्रीपद्मपुराणे उत्तरखंडे श्रीभागवतमाहात्म्यनिरूपणे श्रवणविधिकथनं नाम षष्ठोध्यायः ॥६॥ लिखितं मिश्रकनहीरामेण ॥ पठनार्थं मिश्रजी श्री बृजभूषणजी ॥१॥



१—पाठ प्रायः शुद्ध है।
२—पुस्तक अच्छी अवस्था में है।

—:o:—

क्रम संख्या ६३

## भवानन्दीव्याख्या-टीका।

महादेव पण्डितविरचिता।
न्यायशास्त्र। दे० ना० लिपि। पत्र-संख्या ४१०।
पत्र-प्रमाण ३०.५×१३.५ सैंमी०।
पंक्तियां १३ प्रतिपृष्ठ। अक्षर ३२।
पाठसंख्या ५३३०। सम्पूर्ण।

**प्रारम्भ :—**

श्रीगणेशाय नमः उपाधि ज्ञानादिति मूलस्य मिश्रोक्तमुपोद्घातपरत्वं विहाय दीधितिकृत्संमतं प्रसंगपरत्वमुपपादयति म इत्यादिना इतीति एवं रूपेत्यर्थः योजनायामिति आशयः उपाधिज्ञानादिति मूलेनोपोद्घातसंगतिः प्रदर्श्यते।

तथा हि मूले तादृशयोजनया व्यभिचारज्ञानस्य हेतुज्ञानविषयोपाधिज्ञापकत्वलाभेनोपाधेर्व्यभिचारज्ञापकतार्थाल्लभ्यते तद्व्यापकतां विना तज्ज्ञानज्ञाप्यत्वानुपपत्तेः

**समाप्ति :—**

न च तथापि तस्य जन्यतावच्छेदक धर्मसम्बन्धे भेदेन नानात्वात्तदवच्छिन्नाभावस्यैकत्वासम्भव एवेति वाच्यं अखंडोपधिरूपेणातिरिक्तपादर्थरूपेण वा नानाधर्मसंबंधावच्छिन्नसकलजन्यतासाधारणेन जन्यतात्वेनानुगतिवृत्तस्य जन्यत्वस्यानुगतत्वं संभवादिति दिक् भट्टाचार्यत्वस्य सकलभट्टाचार्यसाधारणत्वेनोत्कर्षसंपादकत्वासंभ (र) वादाह व्याख्यायां भट्टाचार्यः शिरोमणिरितीति। अत्र इति शब्दो ग्रंथसमाप्तौ।

भवानंद वचोव्याख्या महादेवेन निर्मिता
सर्वोपकारिणी नाम्ना संपूर्णा सदनुग्रहात्।

भवानंदवचोव्याख्या समुद्भूतैः श्रमैर्मम
सिद्धेश्वरी जगत्माता प्रीणातु सशिवा भृशम्

विद्वद्वरं मुकुंदाख्यं पितरं प्रणमाम्यहं
यदीयसुवृतेनैव संपूर्णेषा वृतिर्मम

(श्री) बैकुंठदीक्षितं नौमि गुरुं गौतमरूपिणं
येन चूर्णीकृतास्सद्यो विदुषां गर्वपर्वताः

भावानंदीयथार्थं ज्ञानेच्छा यस्य विद्यते
तेनोपायसहस्रेण संग्राह्येयं कृतिर्मम

मदीयकृतिमुत्तमामभिनवार्थविद्योतिनीं
विलोक्य मुदमाप्नुयाद्यदि सतां बुधानां गणः
तदा भवति निंदया किमिह बालिशानां शतैः
विधुः कुवलयेप्सितो न हि न निंद्यते तामसैः ॥६॥

वृत्तिर्मदीया यदिचेत्सिदीहिता
तदा किलास्याश्चरितार्थतैव
कस्तूरिकाऽविज्ञजनैर्विमुक्ता
गुणज्ञलोकादरतः वृताथा ॥७॥

विज्ञापयामि सुहृदो बुधान्सत्संप्रदायिनः
कृपासंभूतदृष्ट्यैषा वीक्षणीया कृतिर्मम

प्रकाशकौस्तुभौ पुत्रा······त्मनामुपकारिणिं
बुद्धिपत्न्यामलौकिक्या महादेवोह्यभावयत्

लौकिक्यां लौकिकं पत्न्यामलौकिक्यामलौकिकं
उत्पाद्यापत्यमभजन्महादेवः कृतार्थतां ॥१०॥

इति श्री काशीवासिमहाशब्दान्वयसंभूतपुण्यस्तंभकारोपनामक श्रीमन्मुकुंदपंडितात्मजमहादेवपंडितविरचिताऽनुमानमणिदीधितिभवानंदीव्याख्या सर्वोपकारिणी संपूर्णा शुभमस्तु संवत् १८७७ मिती फाल्गुण-वदी ३० वार रविवार ॥

१—इस टीका का ठीक नाम सर्वोपकारिणी है।



२.—इस ग्रन्थ में दो भाग हैं। एक का नाम है 'अवयवग्रन्थव्याख्या' तथा दूसरे का 'अनुमानदीधितिभवानंदीव्याख्या सर्वोपकारिणी"। प्रारम्भ में मङ्गलाचरणवाला भाग नहीं है। परन्तु समाप्ति वाला भाग सम्पूर्ण है।

३—लिखाई बहुत अशुद्ध है।

४—पुस्तक अच्छी अवस्था में है।

५—अभी तक अप्रकाशित है।

—:o:—

क्रमसंख्या ६४

## पञ्चीकरणवार्त्तिकाभरणम्।

महादेवभट्टविरचितम्।
वेदान्त। दे० ना० लिपि। पत्रसंख्या १५।
पत्र-प्रमाण ३०.५×१४.८ सैं० मी०।
पंक्तियां १३ प्रतिपृष्ठ। अक्षर ३४ प्रतिपंक्ति।
पाठसंख्या ४१५। सम्पूर्ण।

### प्रारम्भ :–

श्रीगणेशाय नमः इह खलु परमेश्वराराधनार्थमनुष्ठितैर्नित्यादिकर्मभिः परिशुद्धांतष्करणानामत एव नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगवैराग्यशमदमादिसाधनषट्कसंपन्मुमुक्षुत्वाख्य साधनचतुष्टयवतां ब्रह्मजिज्ञासूनां परित्यक्तकाम्यनिषिद्धकर्मणां परमहंसपरिव्राजां श्रवणमनननिदिध्यासनपराणां आरुण्युपनिषदोक्तसंधि समाधावात्मन्याचरेदिति समाधिर्विहितः स च समाधिरोंकारेण कर्त्तव्य इति ओमित्यात्मानं युंजीतेतितैत्तिरीयश्रुतौ विहितः।

### समाप्ति :–

संध्यासु सायंप्रातःसंध्यासु समभ्यसेदर्थानुसंधानपूर्वकं चिंतयेदित्यर्थः कं तत्राधिकारिणं दर्शयति इहेति वैराग्यादिसाधनचतुष्टयसंपत्युपलक्षणार्थं सुधीरिति श्रवणमननजन्यज्ञानवानित्यर्थः कृतश्रवणमननस्यैव

निदिध्यासनेधिकारादिति ६४ अनया पंचीकरणवार्त्तिकाभरणरूपया कृत्या कृष्णः प्रीतो भवतात् बुधाश्च तां समीक्ष्य मोदंतां इति श्रीपंचीकरणवार्त्तिकाभरणंसमाप्तम् ।

१. पाठ प्रायः शुद्ध है ।
२. पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ६५

## मीमांसा भाष्य ।

शबरस्वामिविरचित ।
मीमांसा । दे० ना० लि० । पत्र-संख्या ४६ ।
पत्र-प्रमाण ३२×१३ सैं० मी० ।
पंक्तियां १२ प्रतिपृष्ठ । अक्षर ४१ प्रतिपंक्ति ।
पाठसंख्या १४१५ । प्रथमाध्याय मात्र ।

### प्रारम्भ :–

श्री वक्रतुंडाय नमः श्रीरामानुजाय नमः अथातो धर्मजिज्ञासा लोके येष्वर्थेषु प्रसिद्धानि पदानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगंतव्यं नाध्याहारादिभिरेषां कल्पयितव्योर्थः परिभाषितव्यो वा एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थश्च व्याख्येयास्तद्यत्नगौरवं प्रसज्येत ।

तत्र लोकेऽयमथशब्दो वृत्तादनंतरस्य प्रक्रियार्थो दृष्टो न चेह किंचिद्वृत्तमुपलभ्यते भवितव्यं तु तेन यस्मिन्सत्यनंतरं धर्म्मजिज्ञासावकल्पते तथा हि स प्रसिद्धपदार्थकः कल्पितो भवति तत्तु वेदाध्ययनं तस्मिन्सति हि सावकल्पते नैतदेवमन्यस्यापि कर्मणोनंतरं धर्मजिज्ञासा युक्ता प्रागपि च वेदाध्ययनात्

### समाप्ति :–

अर्थाद्वा कल्पनैकदेशत्वात् स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यतीति श्रूयते तत्र संदेहः किं सर्वस्य स्रुवेणावदातव्यं मांसस्य



द्रव्यस्य संहतस्य च एवं स्वधितिना हस्तेन च उत सर्वेषामर्थतो व्यवस्था द्रवाणां द्रव्याणां स्रुवेण मांसानां स्वधितिना संहतानां हस्तेनेति अविशेषाभिधानादव्यवस्था एवं प्राप्ते ब्रूमः अर्थाद्वा कल्पना सामर्थ्यात्कल्पनेति स्रुवेणावद्येद्यथा शक्नुयात्तथा यस्य शक्नुयात्तस्य चेति आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी एवं चेद्यथाशक्ति व्यवस्था भवितुमर्हति तथांजलिना सक्तून्प्रदाव्ये जुहोतीति द्विहस्तसंयोगोंजलिः स व्याकोशोर्थात्कर्त्तव्यः तथा हि शक्यते होमो निर्वर्त्तयितुं तद्यथा कटे भंक्ते कांस्यपात्र्यां भुंक्त इति अर्थात्कल्प्यते कटे आसीनः कांस्यपात्र्यामोदनं निधाय भुंक्त इति ।

इति श्री शबरस्वामिकृतौ मीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ४ अध्यायः समाप्तः शुभम् ।।

संवत् १८९२ आषाढ़ शुदी ११ सोमवासरायां लिखितं काश्मीरी सुंदरदासेन ।। शुभम्भूयात् ।।

१—प्रथमाध्याय मात्र है ।
२—लिखाई प्रायः शुद्ध है ।
३—पुस्तक अच्छी अवस्था में है ।
४—छप चुकी है ।

—:o:—

क्रमसंख्या ६६

## जीवन्मुक्तिविवेकः ।

सायणाचार्यविरचितः ।
वेदान्त । दे० ना० लिपि । पत्र-संख्या ७३ ।
पत्र-प्रमाण ३०.७×१४.८ सैं०मी० ।
पंक्तियां १३ प्रतिपृष्ठ । अक्षर ३६ प्रतिपंक्ति ।
पाठसंख्या २१३५ ।

## प्रारम्भ :-

ॐ स्वस्ति श्रीगणेशाय नमः ।।
यस्य निश्वसितं वेदा मायया योखिलं जगत् ।।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ।।१।।

वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः ।।
हेतुर्विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ।।२।।

संन्यासहेतुर्वैराग्यं यदहर्विरजेत्तदा ।।
प्रव्रजेदितिवेदोक्तेस्तद्भेदस्तु पुराणतः ।।३।।

विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ।।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ।।४।।

शक्तो बहूदके तीव्रतरायां हंससंज्ञके ।।
मुमुक्षुः परमहंसे साक्षाद्विज्ञानसाधने ।।५।।

पुत्रदारधनादीनां नाशे तात्कालिकी मतिः ।
धिक्संसारमितीदृक्स्याद्विरक्ते मंदिता हि सा ।।६।।

अस्मिन् जन्मनि माऽभूवन् पुत्रदारादयो मम ।
इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता ।।७।।

पुनरावृत्तिसहितो लोको मे मास्तु कश्चन ।।
इति तीव्रतरत्वं स्यान्मंदे न्यासो न कोपि हि ।।८।।

## समाप्ति :-

अथ विद्वत्संन्यासमुपसंहरति तत्पूर्णानंदैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति यद्ब्रह्म वेदांतेषु पूर्णानंदैकबोधः परमात्मेति निरूपितं तद्ब्रह्माहमस्मीत्येवं सर्वदानुभवन्नयं योगी परमहंसः कृतकृत्यो भवति तथा स्मर्यते ।

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ।।



जीवन्मुक्तविवेकेन बंधहार्दं निवारयन् ।।
पुमर्थमखिलं देयाद्विद्यातीर्थमहेश्वरः ।।

इति श्रीजीवन्मुक्तिविवेकोपरमहंसोपनिषत्समाप्तं संवत् १८७२ लिखितं कैथल मध्ये मार्गशिर शुद्धी शनिचरवार २ काश्मीरी शंकरदास पठनार्थं क्षेत्रगिरगुसायी ।

मंगलं लेखकानां च वाचकानां च मंगलं ।।
मंगलं भगवान् विष्णु मंगलं गरुडध्वजः ।।१।।

१—अन्तिम पुष्पिका में 'उपनिषत्' शब्द आजाने से प्रथम पत्र पर इसका नाम "जीवन्मुक्त उपनिषिदः" किसी ने लिख दिया है। इसी से हमारे संग्रहालय में भी इसका नाम "जीवनमुक्त उपनिषद्" ही लिखा गया है।

२—पाठ प्रायः शुद्ध है।

३—पुस्तक अच्छी अवस्था में है।

४—आनन्दाश्रम, पूना से प्रकाशित हो चुकी है।

—:o:—

क्रमसंख्या ६७

## हायनरत्न ।

वलभद्रविरचित ।
ज्यौतिष । दे० ना० लिपि । पत्र-संख्या ।
पत्र-प्रमाण ३३.५×१६.७ सैं०मी० ।
पंक्तियां १४ प्रतिपृष्ठ । अक्षर ५७ प्रतिपंक्ति ।
पाठसंख्यां ४३२७ । सम्पूर्ण ।

## प्रारम्भ :-

ॐ श्रीगणेशायम नमः ।।
ॐ गणाधिपं रामगुरोः पदाब्जं

दामोदराख्यं पितरं च नत्वा
प्राचीनपद्यैर्वलिभद्रनाम
करोति सद्धायनरत्नसंज्ञे ।।१।।

भागीरथीतीरविराजमाने
श्रीकान्यकुब्जे नगरेतिरम्ये
अभूद्भरद्वाजमहर्षिवंशे
श्रीलालनामा गणकोष्टधाम ।।२।।

तस्यात्मजाः पञ्च बभूवुरेषां
श्रीदेविदासः प्रथमं बभूव
व्यक्ते च यः श्रीपतिपद्धतौ च
टीकां व्यधाच्छिष्यगणस्य तुष्टचै ।।३।।

तस्माल्लघुः खेटविचारदक्षः
प्रख्यातकीर्त्तिर्विजितारिपक्षः
श्रीखेमकर्णोथ ततः कनिष्ठो
नारायणो व्याकरणे वरिष्ठः ।।४।।

न्यायेशः (षः) सुरराजपूजितनिभो वेदांतिनामग्रणी
र्मीमांसादिसमस्तशास्त्रकमलप्रोद्‌बोधने भास्करः
श्रीमद्भूपतिवृंद पूजितपदो भूदेवमूर्द्धामणिः
श्रीमन्मिश्रचतुर्भुजाः समभवत्तस्माल्लघुर्धर्मवित् ।।५।।

तस्माल्लघुः सकलशास्त्रकलावरिष्ठो
दामोदरः समभवत्कृतिनां वरिष्ठः
यो भास्करोदितपितामहकर्मतुल्यं
वृत्तिं व्यधात्त्रिरुपमां कृतिनां हिताय ।।६।।

दामोदरस्य तनयौ जातौ बलभद्रबलिरामौ
बलभद्रेण च किंचित्प्रकाश्यते ताजिकं गुरोः कृपया ।।७।।

निबंधा रचिताः पूर्वैः संहिताताजिकादिषु
न हायनफले तस्मान्निबंधं कर्त्तुमुद्यतः ।।८।।

हिल्लाजखंतखर्त्तायिखिंधिरोमकसंमतं
सारं समरसिंहस्य क्रियते वार्षिकं फलं ।।९।।



## समाप्ति :–

निर्मथ्य वा ताजकशास्त्रसिंधु
समुद्धृतो हायनरत्नसंज्ञः
सद्वर्षपत्रीकरणोद्यतानां
ज्योतिर्विदां कंठविभूषणाय ।।१।।

वेत्ति नान्यः परेषां तु सिंधोर्मंथनजं श्रमम्
इति संचिंत्य सोमेश त्वदंघ्रौ रत्नमर्पितम्

पृथ्वीपतिमहावीर श्रीमत्साहिसुजातिके
श्रीराजमहलस्थाने मया ग्रंथं विनिर्मितं

योगमासकृते सम्यक्‌रद्‌भुतो योगस्थितिः स्यात्तिथिः
त्रिघ्नावारमितिस्तदर्घसटशं भं सर्वयोगो युतः
भूबाणाक्षकुभिः १५५१ भवेत् शकमिति ग्रंथस्य तां वेत्ति य
स्तं मन्ये गणितद्वयज्ञकमलद्‌बोधने भास्करं

इति श्रीदैवज्ञाचार्यपंडितदामोदरात्मजबलभद्र विरचिते हायनरत्ने मासप्रवेशादिविचार्याध्यायोऽष्टमः समाप्तः शुभमस्तु सर्वजगतां शुभं भूयात् पाठकलेखकयोः संवत् १८८४ कार्त्तिक कृष्ण ७ भृगुवारे इदं हायनरत्नं संपूर्णं ॐ हरि तत्सद्‌ब्रह्मणे नमः ॐ ।

१—पुरानेपन के कारण पत्रे टूटने लगे हैं। पहला पत्र अधिक टूटा है।
२—लिखाई की अशुद्धियां अधिक हैं।
३—पुस्तक छप चुकी है।

—:o:—

क्रमसंख्या ६८

## काठकोपनिषद्भाष्यटीका।

टीकाकार अज्ञात
उपनिषद्। दे० ना० लिपि। पत्र-संख्या ३२।
पत्र-प्रमाण ३३.१ × १६.५ सैं० मी०।

पंक्तियां १३ प्रतिपृष्ठ। अक्षर ५१ प्रतिपंक्ति।
पाठसंख्या- १३२६।

## प्रारम्भ :-

(टीका) श्रीगणेशाय नमः
धर्माधर्माद्यसंसृष्टं कार्यकारणवर्ज्जितं
कालादिभिरनवच्छिन्नं ब्रह्मयत्तन्नमाम्यहं ॥१॥

यः साक्षात्कृतपरमानंदो यावदधिकारं याम्ये पदे वर्त्तमानोऽकर्त्तृ-ब्रह्मात्मतानुभवबलतो भूतयातनानिमित्तदोषैरलिप्तस्वभाव आचार्यो वरप्रदानेन परब्रह्मात्मैक्यविद्यामुपदिदेश यस्मै चोपदिदेश ताभ्यां नमस्कुर्वन्नाचार्यभक्तेर्विद्याप्राप्त्यंगत्वं दर्शयति ॐ नमो भगवते वैवस्वतायेति अथ-शब्दो मंगलार्थः चिकीर्षितं प्रतिजानीते काठकेति।

(भाष्य) ॐ श्रीगणेशाय नमः ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय निचिकेतसे च अथ काठकोपनिषद्वल्लीनां सुखार्थबोधनार्थमल्पग्रंथवृत्तिरारभ्यते सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति उपनिषच्छब्देन च व्याचिख्यासित ग्रंथप्रतिपाद्यवस्तुविषयाविद्योच्यते केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यते इति।

(मूल) श्री॰ उशन् ह व वाजश्रवसः सर्ववेदसं ददौ तस्य ह निचिकेता नाम पुत्र आस तं ह कुमारं संतं दक्षिणासु नीयमानासु श्रद्धाविवेश १ सीमन्यत पीतोदका जग्धतृणा दुग्धदोहा निरिंद्रिया अनंदा नाम ते लोकास्तान्स गच्छति ता वदत् २ स होवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं तृतीयं तं होवाच मृत्यवे त्वा ददामीति। ३।

## समाप्ति :-

(मूल) अंगुष्ठमात्रः पुरूषोंतरात्मा सदा जनानां हृदये संनिविष्टः तस्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतं शुक्रममृतमिति ॥१८ मृत्युप्रोक्तां निचिकेतोथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नं ब्रह्मप्राप्तो विरजोभूद्विमृत्युरन्योप्येवं यो विदध्यात्ममेवम् १९ सह ना ववतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि नावधीतमस्तु मा विद्विषावहै ॐ



शांतिः शांतिः शांतिः २० इति श्री अथर्वणवेदे काठकोपनिषदि षष्ठी वल्ली समाप्त द्वितीयोध्यायः ॥२॥

(भाष्य) तदेवमध्यात्ममेवमुक्तप्रकारेण यो वेद विजानातीत्येवंवित्सापि विरजः सन् ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः शिष्याचर्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषशमनार्था इयं शांतिरभिधीयते सह नावावामवतु पालयतु विद्यास्वरूपप्रकाशनेन कः स एव परमेश्वरः उपनिषत्प्रकाशितः किं च सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु सहैवावां विद्याकृतं वीर्यं सामर्थ्यं करवावहै निष्पादयावहै किं च तेजस्विनौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु अथवा तेजस्विनावावाभ्यां यदधीतं तदतीव तेजस्वि वीर्यवदस्तु-इत्यर्थः मा विद्विषवहै शिष्याचार्यावन्योन्यं प्रमादकृतान्यायाध्यापनाध्ययनदोषनिमित्तं द्वेषं मा करवावहै इत्यर्थः शांतिः शांतिः शांतिरिति त्रिर्वचनं सर्वदोषोपशमनार्थमित्युपनिषत्समाप्त्यर्थः २० ॥

इति श्रीगोविंदभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवत्कृताकाठभाष्ये द्वितीयाध्याये तृतीयवल्ली समाप्ता सैव षष्ठी वल्ली ६ ॥

(टीका) आत्मानं देहमधिकत्य वर्त्तत इत्यध्यात्म प्रत्यग् स्वरूपमेव ब्रह्म प्राप्य विमृत्युर्भवति १९ ॥ नान्यद्रूपमर्चिरादिमार्गगम्यं प्राप्य संयोगस्य वियोगावसानत्वादित्यर्थः एवं शब्दस्य विच्छब्देन सह संबंधः एवं विदिति २० ॥

इति श्रीशांकरस्य काठकोपनिषद्भाष्यस्य टीका समाप्ता।

१—लिखाई शुद्ध है।
२—पुस्तक अच्छी अवस्था में है।
३—आनन्दाश्रम, पूना से प्रकाशित हो चुकी है।

—:o:—

क्रमसंख्या ६९

## शङ्करजयः ।

माधवविरचितः ।
काव्य । दे० ना० लिपि । पत्र-संख्या ९५ ।
पत्र-प्रमाण ३३.२×१५.०० सैं० मी० ।
पंक्तियां ११ प्रतिपत्र । अक्षर ३६ प्रतिपंक्ति ।
पाठसंख्या २३२० ।

### प्रारम्भ :-

श्रीगणेशाय नमः ।।ॐ।।
प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणं ।।
प्राचीनशंकरजये सारः संगृह्यते स्फुटं ।।१।।

यद्वद्धटानां पटलो विशालो
विलोक्यतेऽल्पे किल दर्पणेऽपि ।।
तद्वन्मदीये लघुसंग्रहेस्मिन्
उद्वीक्ष्यतां शांकरवाक्यसारः ।।२।।

यथा हि रुच्ये मधुरेऽपि रुच्यु-
त्पादाय रुच्यंतरयोजनार्हा ।।
तथेष्यतां प्राक्कविहृद्यपद्ये
ष्वेषापि मत्पद्यनिवेशभंगी ।।३।।

स्तुतोपि सम्यक्कविभिः पुराणैः
कृत्यापि नस्तुष्यतु भाष्यकारः ।।
क्षीराब्धिवासी सरसीरुहाक्षः
क्षीरं पुनः किं चकमे न गोष्ठे ।।४।।

पयोब्धिनिविरीसुनिः सृतसुधाभरीमाधुरो
धुरीणभणिताधरीकृतफणाधराधीशितुः ।।
शिवंकरसुशंकराभिधजगद्गुरोः प्रायशो
यशो हृदयशोधकं कलयितुं समीहामहे ।।५।।



### समाप्ति :-

विद्युद्वल्लीनियुतसमदारब्धयुद्धैर्विमानः
संख्यातीतैः सपदि गगनाभोगमाच्छादयंतः ।।
स्तुत्वा देवं त्रिपुरमथनं ते यतीशानवेषं
मंदारोत्थैः कुसुमनिचयैरन्नुवन्नर्चयंतः ।।४।।
भवानाद्यो देवः कवलितविषः कामदहनः
पुरारातिर्विश्वप्रभवलयहेतुस्त्रिनयनः ।
यदर्थं गां प्राप्तो भवमथन वृत्तं तदधुना
तदायाहि स्वर्गं सपदि गिरिशास्मत्प्रियकृते ।।५।।
उन्मीलद्विनय (न) प्रधानसुमनोवाक्यावसाने महा-
देवे संभृतसंभ्रमे निजपदं गन्तुं मनः कुर्वति ।
शैलादिप्रमुखैः परिष्वृतपुवस्तस्थौ पुरस्तात्क्षणा-
दुक्षा शारदवारिमुग्धवलिमाहंकार (हुं) कारकृत् ।।६।।
इंद्रोपेंद्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानः प्रसूनै-
र्दिव्यैरभ्यर्च्यमानः सरसिरुहभवादत्त (रु) हस्तावलंबः ।
आरुह्योक्षाणमग्न्यं प्रकटितसुजटाजूटचंद्रावतंसः
शृण्वन्नालोकशब्दंसमुदितमृषिभिर्धाम नैजं प्रतस्थे ।।१०७।।
इति श्रीमधवीये तच्छारदापीठवासगः
संक्षेप शंकरजये सर्गः पूर्णोपि षोडशः ।।१६।।

संवत् १८५३ ।। श्रीगंगेश्वराय नमः ।। श्री लक्ष्मिनारायणाय नमः ।। सुभमस्तु दीपमालका के दिन सभाप्तिर्भाला ।। लिखितं च शिवगिरिणा स्वपठनार्थं ।।

१. लिखाई में अनेक अशुद्धियां हैं ।
२. पुस्तक अच्छी अवस्था में है। केवल अन्तिम पत्र कीड़े ने खा रक्खा है।
३. हमारे संग्रहालय में विद्यमान हस्तलिखित क्रमसंख्या ५३ भी नाम-भेद से यही ग्रन्थ है ।

—:o:—

क्रमसंख्या ७०

## शास्त्रसिद्धान्तलेशसंग्रहसारः ।

शिवेनक विरचितः ।
वेदान्त । दे०ना० लिपि । पत्रसंख्या ३३ ।
पत्र-प्रमाण ३४.०×१५.५ सैं०मी० ।
पंक्तियां १३ प्रतिपृष्ठ । अक्षर ३७ प्रतिपंक्ति ।
पाठसंख्या ९६२ । सम्पूर्ण ।

### प्रारम्भ :–

ॐ स्वस्ति श्रीगणेशाय नमः ।।
दुःखिनो यं समाश्रित्य सुखमीयुः सुदुर्ल्लभं
विभीषणादयो रामं तं वंदे सद्गुरुं पुनः ।।१।।

शास्त्रसिद्धान्तलेशसंग्रहनिबन्धस्थमतानां सुखं स्वबोधाय तत्पाठः क्वाप्यर्थांशश्च संगृह्यते मया

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि
सा सैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता ।।१।।

अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमानेषु पदार्थेषु विसेधो न दोषावहः इति वार्त्तिकपरिमलोक्तदिशा वक्षमाणानां मतविशेषाणां सर्वेषां निरवद्यत्वमूह्यं अथ विधिवादः । तदर्थंश्च तत्त्वबुभुत्सुकथा एवमग्रेपि तत्रादावात्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यधीतसांगवेदस्य वेदांतैर्जनितसामान्यज्ञानविषये ब्रह्माभिन्नात्मनि संजातविशेषजिज्ञासस्य तद्ज्ञानाय वेदांतश्रवणे प्रतीयमानो विधिः कीदृश इति विचार्यंते त्रयो हि विधेः प्रकाराः पूर्वमीमांसायां प्रसिद्धाः अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति ।

### समाप्ति :—

ननु तैस्तु पाठमात्रमेवोद्धृतमतोऽत्र तद्वत्पाठोद्धारांशेऽदोषेपि तदर्थांशोद्धारे दोषस्तदवस्थ इति विषमोत्र तद्दृष्टांत इति तर्हि बृहद्वार्त्तिकात्तदुभय



मुद्धर्त्तुर्वार्त्तिकसारनिर्मातुस्त्वदुक्तदोषापत्तेस्तत्रापि तद्दोषदर्शनेन तवारुचिश्चेत्तर्हि त्वद्भ्न्निष्ठमत्सरालक्षणपित्तमेव तन्निदानमतस्तच्छांत्यर्थं परमशीतलमधुतरमहद्गुणांचित (न) लक्षणभेषजमेव पिव न तत्त्वतिजल्पनं कुरुष्वेत्यलं बहुपल्लवितेन अत्र सर्ववादसंख्या मद्बुद्ध्यनुरोधेन चत्वारिंशदिति ।।४०।। तथा सर्वसमाधानसंख्या च एकोनशतद्वयमिति ज्ञेया ।।१९९।।

श्रीरामं मनसा ध्यात्वा श्रीगुरुं संप्रणाम्य च ।।
पाठं सिद्धान्तलेशस्य समगृहीच्छिवेनकः ।।१।।

समाधिगणनायात्र यन्मया साहसं कृतम् ।।
क्षंतव्यं तद्बुधैः सर्वैः क्षमाशीला हि ते यतः ।।२।।

तत्संख्यानं स्वबोधार्थं रामतुष्ट्यर्थमेव च ।।
जानंति हि स्वतस्तज्ज्ञाः न तदर्थं मया कृतम् ।।३।'

यदि ते बालबोधार्थं पश्येयुः संग्रहं त्विमं ।।
तदा तैरवशोध्योयं नोपेक्ष्योत्युपकारिभिः ।।४।।

इति श्रीशास्त्रसिद्धांतलेशसंग्रहसारे फलाभिधश्चतुर्थः परिच्छेदः ।।४।। समाप्तिमगात् समाप्तश्चायं निबंधः कनखलाभिधे क्षेत्रे खलेभ्योपि निमज्जन-मात्रान्मुक्तिप्रदे शुभे इति शुभमस्तु सर्वेभ्यः ।। ॐ तत्सत् ।। संवत् १९१५ ।। लिखतं कन्हैयालालमल्हाणपठनार्थं ।। गोपालमिश्र ।। शुभमस्तु ।।

१—अप्पयदीक्षितविरचित शास्त्रसिद्धान्तलेशसंग्रह का संक्षिप्तरूप है।
२—यत्र-तत्र लिखाई की अशुद्धियां हैं।
३—पुस्तक के आदि एवं अन्त वाले एक-एक पत्र कीड़े ने खा लिए हैं। अन्यथा पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ७१

## व्रतार्कः ।

भट्टशङ्कर विरचितः ।
धर्मशास्त्र । दे०ना० लिपि । पत्रसंख्या ३५१ ।
पत्र-प्रमाण २४.८×१३.२ सैं०मी० ।

पंक्तियां १२ प्रतिपृष्ठ। अक्षर ३४ प्रतिपंक्ति।
पाठसंख्या ८९५०। अपूर्ण।

## प्रारम्भ :—

वर्ज्जयेद्देवदर्शनं ।। लल्लः ।।

नीचस्थे चक्रसंस्थेप्यतिचरणगते बाल-वृद्धास्तगे वा
संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा
मौंजीबंधोथ चूड़ा परिणयनविधिर्वास्तु देव प्रतिष्ठा
वर्ज्या सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते चेति ।।
नीचस्थो मकरस्थः ।। कल्पतरौ देवीपुराणे ।।—

सिंहसंस्थं गुरुं शुक्रं सर्वारंभेषु वर्जयेत् ।।
प्रारब्धं न च सिध्येत महाभयकरं भवेत् ।।

पुत्रमित्रकलत्राणि हन्याच्छीघ्रं न संशयः ।।

देवारामतडागेषु व्रतोद्यानगृहेषु च ।।
सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् ।।

## समाप्ति :—

मलमासव्रतं पश्चाद्वासरस्य व्रतान्यथ ।
रविवारव्रतं वादावाशादित्यव्रतं ततः ।।

सोमवारव्रतं पश्चाद्भौमवारव्रतं ततः ।
संक्रांतेरथ कथ्यंते व्रतानि विविधानि वा ।।
उपायनं ततः प्रोक्तं घृतेन स्नपने ततः ।
घृतकंबलकः प्रोक्तो व्यतीपातव्रतं ततः ।।

लक्षपूजाविधिः प्रोक्तो नमस्कारविधिस्ततः ।
लक्षवर्त्तिविधिः प्रश्चादगस्त्यार्घविधिस्ततः ।।

अश्वत्थस्य विधिः प्रोक्तो लिंगस्योद्यापनं ततः ।
तुलस्यास्तु विवाहश्च इत्येवं कथितः क्रमः ।।

सनिर्णयानि यानीह कथितानि व्रतानि तु ।
तेषां द्रुताप्तये भट्टशंकरोनुक्रमं व्यधात् ।। सम्पूर्णम् ।।

संकल्पेंकुरितं द्विपत्रितमथ प्रस्थानवेलागमे
मार्गे पल्लवितं पुरं प्रविशतः शाखाशतैराचितं ।।



प्रातर्भाविनि दर्शने मुकुलितं राजेंद्र दृष्टे त्वयि
प्रोत्फुल्लं फलितं च संप्रति मनो राज्यद्रुमेनामुना ।।
इत्याशीः ।। शुभमस्तु ।। संवत् ।।९५।। आहादप्र ।।१७।। संपूर्णं ।।

१—लिखने का संवत् १८९५ विक्रमीय प्रतीत होता है।

२—लिखाई प्रायः शुद्ध है।

३—पुस्तक अच्छी अवस्था में है। परन्तु पत्र १, ९५ से ९९, २०२ से २१० तथा ३६६ एवं ३६७ नहीं है।

—:O:—

क्रमसंख्या ७२

# विवाह वृन्दावन (सटीक)।

केशवार्क विरचित।
टीका—
टीकाकार गणेश दैवज्ञ
ज्यौतिष। दे०ना० लिपि। पत्र-संख्या ९६।
पत्र-प्रमाण ३४×१७ सें०मी०।
पंक्तियां १० प्रतिपृष्ठ। अक्षर ४३ प्रतिपंक्ति।
पाठसंख्या २५८०। सम्पूर्ण।

## प्रारम्भ :-

(टीका) श्रीगणेशाय नमः ।।
तीर्थानामधिपः कुभृच्छ्रितपदोसत्यक्तवेलास्थिति-
यत्पर्यामिकलद्विजाधिपसमीक्षाप्तोरुमुत्पूरभृत् ।
लक्ष्मीसोखिल दानवारिसततप्रस्निग्ध सद्मक्षिति-
र्दोषध्वस्तमलो जयत्युरुकपासिंधु गुरुः केशवः ।।१।।

अथ चतुष्ठवार्थी—तत्र प्रथमं गुरुपक्षे केशवो गुरुर्जयति सर्वोत्कर्षण वर्त्तते गृणात्युपदिशति शास्त्राणीति गुरुः तमेव सर्योत्कर्षं द्योतयति तीर्थानामधिप इत्यादि विशेषणैः तोर्थोध्वरे गुरौ मार्गं इत्यभिधानात्

(मूल) श्रीशार्ङ्गिणोः सृजतु वो नवसन्निवेशः
क्लेशाव्ययं चलवलंनयनांचलश्री(:)
यत्रांचलग्नथनमंगलमाचचार
श्रृंगार हार मणिकौस्तुभरश्मिगुम्फः ।।१।।

संवर्ग्य गर्गभृगुभागुरिरैभ्यगीर्भ्यः
सारं वराहमिहिरादिमतानुसारं ।
स्फारत्स्फुरत्परिमलाढ्यफलं विवाह-
वृंदावनं विरचयामि विचाररम्यं ।।२।।

## समाप्ति :–

(मूल) श्रीकेशः सुकविरध्ययनाध्वनीन
व्यूहान् प्रतर्पयितुमर्थपयः प्रवाहैः ।
दैवज्ञराणगसुतः सुतपःश्रयेस्मिन्
वृंदावने मुनिगवीनिवहं दुदोह ।।३।।

अबहुदृष्टधियः कियदप्यदः
पदगभीरमधीरभिरंस्यते
विशदशास्त्रधियां त्विदमेकदा
श्रुतितरं रसनासु विवृत्स्यते ।।४।।

(टीका) अबहुदृष्टधिय इत्यादि द्रुतविलंबितं न बहु दृष्ट यया सा अबहुदृष्टासाधीर्यस्यासौ अबहुदृष्टधीस्तस्य अल्पदृष्टशास्त्रस्य अदः एतदपि कियत् किं परिमाणमस्येति कियत् विशिष्टगुणमप्येतत् तस्य न किंचिदिति भावः अबुद्धिः अभिरंस्यते अभिरामं प्राप्स्यति अत्र विशेषणद्वारा हेतुपदेतिपदैः गभीरं गंभीरपदं अतिमंदबुद्धिः सु अर्थं जानातु वा न वा पदगंभीरत्वादेव आह्लादयिष्यतीत्यर्थः विशदशास्त्रधियां तु तुविशेषविसदा अत्यधिका शास्त्रे धीर्येषां ते तथा तेषां तु इदं एकदा एकवारमेव श्रुतिगतं कर्णप्राप्तं सत् यस्य कस्यापि रोचते विवृद्धे प्राप्स्यति गौल्यरसायनं सन् यस्य कस्यापि रोच्यते इदं तु कर्णपथे गतं सतरसनासु विवृतस्यत इति रुच्यतिशयोक्तिः उक्तं हि भर्तृहरिणा अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रंजयति इति। इति ग्रंथालंकारः ।।

१—लिखाई बहुत अशुद्ध है ।



२—पुस्तक अच्छी अवस्था में है ।
३—छप चुकी है ।

—:o:—

क्रमसंख्या ७३-क

## ताजिक नीलकण्ठी (सटीक)

नीलकण्ठज्योतिर्विद्विरचित ।
टीकाकार विश्वनाथ ज्योतिर्विद् ।
ज्यौतिष शास्त्र । दे०ना० लिपि । पत्र-संख्या ६३ ।
पत्र-प्रमाण ३१.००×१३.८ सैंमी० ।
पंक्तियां १४ प्रतिपत्र । अक्षर ३७ प्रतिपंक्ति ।
पाठ-संख्या २००८ । संज्ञा-तन्त्र मात्र ।

## प्रारम्भ :—

(टीका) श्रीगणेशाय नमः ।

चंडीकुंडलमाकलय्य कुतुकाद्दंडाभशुंडाग्रगं
कृत्वा तांडवडंबरे पशुपतेः खेलच्चलन् शृंखलं
चंडांशोरिव मंडलं तदपरं संदर्शयन्नंबरे
हेरंबो जगदाम्बिकां विहसयन्वः श्रेयसे गर्जताम् ।।१।।

दिवाकरो नाम बभूव विद्वान्
दिवाकराभो गणितेषु मन्ये
स्वकल्पितैर्येन निबन्धवृंदै-
र्बद्धं जगद्दर्शितविश्वरूपम् ।।२।।

तस्यात्मजाः पंच समाबभूवुः
पंचेंद्रकल्पा गणितागमेषु
पंचानना वादिगजेंद्रभेदे
पंचाग्निकल्पा द्विजकर्मणा च ।।३।।

अजनिष्ट कृष्णनामा ज्येष्ठस्तेषां कनिष्ठानां
विद्वानवद्यवाचां प्राचां वेत्ता जगत्ख्यातः ।।४।।

तस्माज्जातः कनिष्ठो विविधबुधगणश्रेष्ठतां प्राप जाग्र-
ज्ज्योतिःशास्त्रेण शश्वत्प्रकटितविभवा यस्य शिष्याः प्रशिष्याः
विष्णुज्योर्तिविदुर्वीपतिविदितगुणो भूमिदर्वीकरेंद्रो
ग्रंथव्याख्यानखर्वीकृतविबुधगुरुर्गर्वहा गर्वभाजां ॥५॥

आसीदासिषुदासीकृतगणकगणग्रामणीगर्वभेत्ता
वेत्ता ग्रंथांतराणामतिगुरुरनुजस्तस्य कस्याप्यजेयः
मल्लारिर्विदिवृंदप्रशमनविधये कोपि मल्लारिनामा
व्यक्ताव्यक्तप्रवक्ता जगति विशदयन्सर्वसिद्धांतवेत्ता ॥६॥

तस्यानुजः केशवनामधेयो
ज्योतिर्विदानंदसमुद्रचंद्रः
वाणीप्रवीणान्वचनामृतेन
संजीवयामास कलाविलासी ॥७॥

तस्यानुजः संप्रति विश्वनाथो
विष्णुप्रसादाद्गुणमात्रजिष्णुः
सर्वज्ञदैवज्ञविलासविज्ञो
नृसिहतः साधितसर्वविद्यः ॥८॥

आसीद्वेदांतवेदी स्मृतिनिगमपटुग्रामणीगर्वभेत्ता
कर्त्ता ग्रंथांतराणां फणिपतिनिगमस्यापि वेत्ताधिकारी
वक्ता श्रीनीलकंठात्मजभजनपटुर्नीलकंठः स चक्रे
संज्ञातंत्रं दुरूहं सकलशुभदशादुर्दशादर्शभूतं ॥९॥

गोदातीरस्थगोलाभिधपुरवसतिः पार्थदेशैकभूषा
संज्ञातंत्रस्यटीकां व्यदधदभिनवां गद्यपद्यानवद्यां
शश्वद्विश्वोपकृत्यै विशदतरतया दैवविद्विश्वनाथो
ग्रंथोग्रग्रंथिभेत्ता ग्रहगणितविदामप्यगण्योप्यगर्वः ॥१०॥

निर्विघ्नग्रंथसमाप्त्यर्थं मंगलमाचरन् चिकीर्षितं प्रतिजानीते-

(मूल) प्रणम्य हेरंवमथो दिवाकरं
गुरोरनंतस्य तथा पदांबुजं
श्रीनीलकंठो विविनक्ति सूक्तिभि—
स्तत्ताजिकं सूरिमनः प्रसादकृत् ॥१॥



## समाप्ति :—

(मूल) आसीदसीमगुणमंडितपंडिताग्र्यो
व्याख्याद्भुजंगपगवीः श्रुतिवित्सुवृत्तः
साहित्यरीतिनिपुणो गणितागमज्ञः
चिंतामणिर्विपुलगर्गकुलावतंसः ॥६३॥

तदात्मजोनंतगुणोस्त्यनंतो
योधोक् सदुक्तीः किल कामधेनुं
संतुष्टये जातकपद्धतिं च
निरूपयद्दुष्टमतं निरस्य ॥६४॥

पद्मांबयासावि ततो विपश्चित्
श्रीनीलकंठः श्रुतिशास्त्रनिष्ठः
विद्वच्छिवप्रीतिकरं व्यधासीत्
तद्वर्षतन्त्रं मृगयादियुक्तम् ॥६५॥

(टीका) इति श्रीदिवाकर दैवज्ञात्मजविश्वनाथदैवज्ञविरचिते नीलकंठ ज्योतिर्वित्कृतसंज्ञातंत्रे सहमाध्यायस्य व्याख्योदाहृतिः समाप्ता ।

अकारि विश्वनाथेन संज्ञातंत्रप्रकाशिका
टीका टीकाकृता कार्या सज्जालजानुवंधनं ॥१॥

१—लिखाई में यत्र-तत्र अशुद्धियां हैं ।

२—पुस्तक अच्छी अवस्था में है ।

३—छप चुकी है । परन्तु अब दुष्प्राप्य है ।

—:o:—

क्रमसंख्या ७३-ख

## ताजिकनीलकण्ठी (सटीक) ।

नीलकण्ठ ज्योतिर्विद्विरचित ।
टीकाकार
ज्योतिष शास्त्र । दे०ना० लिपि । पत्र-संख्या ६४ ।

पत्र-प्रमाण ३१.००×१३.८ सैं०मी० ।
पंक्तियां १४ । अक्षर ३७ ।
पाठसंख्या २१०४ । वर्षतन्त्र मात्र ।

## प्रारम्भ :–

(टीका)
णां भोजं प्रकुर्वे ततो
लब्ध्वा बोधमतिर्पितामहकृतौ सत्ताजिके व्याकृतिम् ।।७।।
जीर्णास्ति टीका महतीति मूलं
तत्स्थं विचारं मुनिसम्मतं च
हित्वाहमल्पां शिशुबोधिनीं तां
समाविवेकस्य करोमि टीकां ।।८।।

तत्र तावत्सकलमुनिश्रेष्ठगार्ग्यवंशतिलको खिलविद्वद्दैवज्ञमुकुटहीरो-नंतज्योतिर्वित्तनुजो नीलकंठज्योतिर्वित्संज्ञातंत्रवर्षतंत्रप्रश्नतंत्ररूप-प्रकरणत्रयात्मकस्य जीर्णताजकशास्त्रस्य द्वितीयं प्रकरणं समाविवेक-नामकं सद्यः सदसत्फलौपकिकं वंशस्थ-विराद्यनेकश्रव्यछंद सहितं चिकीर्षुरनेकजन्मोपर्जितं दुरितसंभूतं भूतविघ्नध्वंसकामनायै निर्विघ्न-ग्रन्थसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च स्वकुलाराध्यतम-गणेशस्तुतिरूपं मंगलमुपजातीयमाह

(मूल) स्वस्वाभिलाषं नहि लब्धुमीशा
निर्विघ्नमीशानमुखाः सुरौघाः
विना प्रसादं किल यस्य नौमि
तं ढुंढिराजं मतिलाभहेतोः ।।१।।

## समाप्ति :–

(मूल) पद्मांबयासावि ततो विपश्चि-
च्छ्रीनीलकंठो श्रुतिशास्त्रनिष्ठः
विद्वच्छिवप्रीतिकरं व्यधासी
त्तद्वर्षतन्त्रं मृगयादियुक्तम् ।।३८।।

शके नदाश्रवाणेंदुमित आश्विन मासके
शुक्लेष्टम्यामिमं ग्रंथं नीलकंठबुधोकरोत् ।।२।।

इति श्रीनीलकंठविरचितं वर्षतंत्रसमाप्तम्



(टीका) श्रीमत्पितामहकृतस्य स तानिकस्य
सच्छिष्यसंघविहितार्थनया प्रद्युम्नः
स्वल्पामुदाहृतियुतां शिशुबोधिनीं तां
श्रीवर्षतत्रविवृतिं सुगमामकार्षीत् ।।७।।

इति श्रीविद्वद्दैवज्ञमुकुटभूषणगोविंदज्योतिर्वित्सूनुमाधवज्योतिर्वि-रचितायां शिशुबोधिनीनाम्नीं समाविवेकटीकायां विवृतिः संपूर्णम्

१ पुस्तक का पहला पत्र नहीं है ।
२ लिखाई में अशुद्धियां हैं ।
३ पुस्तक अच्छी अवस्था में है ।
४ बहुत पहले लिथो में छपी थी । अब दुष्प्राप्य है ।

—:o:—

क्रमसंख्या ७४

# श्रीमद्भगवद्गीता ।

वेदान्त शास्त्र । दे॰ना॰ लिपि । पत्र-संख्या ८६ ।
पत्र-प्रमाण २१.५×११.६ सैं०मी० ।
पंक्तियां ७ प्रतिपत्र । अक्षर २२ प्रतिपंक्ति ।
पाठसंख्या ८४७ । अपूर्ण ।

## प्रारम्भ :–

श्रीगणेशाय नमः ।। ॐ अस्य श्रीभगवद्गीता मालामत्रस्य भगवा-न्वेदव्यास ऋषिः ।। अनुष्टुप् छदः श्रीकृष्णः परमात्मा देवता ।। अशोच्या-नन्व शोचस्त्वं प्रज्ञावादांश्च भाषस इति बीजम् ।। सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति शक्तिः अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इति कीलकम् नैनंछिंदंति शस्त्राणि नैनं दहति पावक इत्यंगुष्ठाभ्यां नमः न चैनं क्लेदयंत्यापो न शोषयति मारुत इति तर्जनीभ्यां नमः ।।···

## समाप्ति :–

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुत हरेः ।।
विस्मयो मे माहन् राजन् हृष्यामि च पुनः पुनः ।। ७७ ।।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्द्धरः ।।
तत्र श्री विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ।। ७८ ।।

इति श्रीभगीवद्गतासूपनिषत्सु ब्रह्म विद्यायां योगशास्त्रे श्री कृष्णार्जुन- संवादे मोक्षसंन्यासयोगोनामाष्टादशोध्यायः ।। शुभमस्तु लेखकपाठकयोः ।। संवत् १६०० ।। श्रावण शुदि ।। १३ ।।

यद्यपि बीच में से नष्ट हुए अनेक पत्रे किसी व्यक्ति ने लिख कर लगाए हैं । तथापि कुछ श्लोक लिखने शेष रह गए हैं ।

२ लिखाई की अशुद्धियां बहुत कम हैं ।

३ पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ७५

## कालनिर्णयः ।

माधवाचार्य विरचितः ।
धर्मशास्त्र । दे॰ना॰ लिपि । पत्र-संख्या १०७ ।
पत्र-प्रमाण ३२.६×१६.१ सैं॰मी॰
पंक्तियां १६ प्रतिपृष्ठ । अक्षर ३९ प्रतिपंक्ति ।
पाठसंख्या ४१७३ । पूर्ण ।

### प्रारम्भ :–

श्रीगणेशाय नमः

वागीशाद्यः सुमनसः सर्वार्थानामुपक्रमे
यं नत्वा कृतकत्याः स्युस्तं नमामि गजाननं ।।१।।

सोहं प्राप्य विवेकतोर्थपदवीमाम्नायतीर्थे परं
मज्जन् सज्जनसगतीर्थनिपुणः सद्वृत्ततीर्थं श्रयन्
लब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकंठमव्याहतं ।।२।।

सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पचस्कंधकृती षडन्वयहृढः सप्तांगसर्वंसहः
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्तोच्छ्रायधुरंधरो विजयते श्रीबुक्कणक्ष्मापतिः ।।३।।



व्यामूढानामिह तनुभृतां जाह्नवी तीर्थमेकं
विद्यातोर्थं प्रकृतिविमलं सद्विवेकोदयानां
सर्वेषां तत्प्रथमसुखदं भारतीतोर्थमाहु
स्तद्भावान्मे विमलमनसो निर्णये शक्तिरस्ति ।।४।।

व्याख्याय माधवाचार्यो धर्मान्पाराशरानथ
तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः ।।५।।

### समाप्ति :–

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ।। इति ।।

पुत्री नोपवसेत् तदाह नारदः
संक्रांत्यामुपवासं च कृष्णैकादशवासरे
चंद्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान गृही ।।

ग्रस्तास्तमये तु पुत्रिणोप्युपवास एव
अहोरात्रं न भोक्तव्यमिति भोजन प्रतिषेधात्

इति श्रीमन्माधवीयकालनिर्णये ग्रहणनिर्णयः इति श्री मन्माधवीय कालनिर्णयः समाप्तः शुभम्भूयात् संवत् १८७२ फाल्गुणवदी गुरुवास-रायाम् राम राम राम राम

मंगलं लेखकानां च पाठकानां च मंगलं
मंगलं सर्वलोकानां भूमिभूपतिमंगलं ।।१।।
उभयोर्मंगलं भवतु ।।

१ पुस्तक के पहले और पिछले दो दो पत्रे अधिक टूट गए हैं ।
२ पुराना होने के कारण काग़ज़ टूटने लगा है ।
३ लिखाई प्रायः शुद्ध है ।

-- :o:—

क्रमसंख्या ७६

## सूर्यसिद्धान्त ।

सूर्यप्रोक्तः
विवरणटीकया युतः
टीकाकारः भूधरः
ज्यौतिष । दे॰ना॰ लिपि । पत्र-संख्या १८० ।

पंक्तियां १२ प्रतिपृष्ठ।
अक्षर ४१ प्रतिपंक्ति।
पाठसंख्या ३३३२। पूर्ण।

**प्रारम्भ :–**

(टीका) ॐ श्री गणेशाय नमः ॐ श्री सूर्याय नमः ॐ
यस्योदये निखिलविश्वसहस्रपत्र–
मुज्जृम्भते भवति संकुचितं तदस्ते
तं विश्ववंद्यसुरवंदितपादपद्म
सव्येतराच्युतहृद्यं प्रणमामि सूर्यं ॥१॥

कांपिल्ये सुरसिधुवंधुरतटे ज्योतिर्विदामग्रणी-
र्भारद्वाजकुलेमलेसमभवत् श्रीखेमशर्माह्वयः
तत्पुत्रो नृपवृंदवंदितपदः श्रीदेवदत्ताभिधः
कीर्त्या निर्मलयोज्ज्वलाः समतनोद्यः पंक्तिसंख्या दिशः ॥२॥

भूवरस्तत्सुतः सूर्यसिद्धांतं विवृणोम्यहं।
गुरूणां पादयुगलकगलभ्रमरायितः ॥३॥

अथ निर्विघ्नेन प्रारिप्सितसमाप्तिकामो निखिलजगदादिकारणभूत देवदेवनमस्काररूपं शिष्टाचारपरिप्राप्तकर्त्तव्यताकं मंगलमाचरति ग्रन्थकारः—

(मूल) अचिंत्याव्यक्तरूपाय निर्गुणाय गुणात्मने।
समस्तजगदाधारमूर्त्तये ब्रह्मणे नमः ॥१॥

अल्पावशिष्टे तु कृते मयो नाम महासुरः
रहस्यं परमं पुण्यं जिज्ञासुर्ज्ञानमुत्तमम् ॥२॥

वेदांगमग्र्यमखिलं ज्योतिषां गतिकारणं
आराधयन्विवस्वंतं तपस्तेपे सुदुश्चरं ॥३॥

तोषितस्तपसा तेन प्रीतस्तस्मै वरार्थिने
ग्रहाणां चरितं प्रादान्मयाय सविता स्वयं ॥४॥

**समाप्ति :–**

(मूल) इत्युक्त्वा मयमामंत्र्य······सक्तेनाभिपूजितः
दवसापक्रमेकांशः प्राविशत्स्वं स मण्डलं ॥२३॥



मयोपलब्धा तज्ज्ञानं दिव्य साक्षाद्विवस्वतः
कृतकृत्यस्तमात्मानं मेने निर्धूतल्मषं ॥२४॥

ज्ञात्वा तमृषयश्चाथ सूर्याल्लब्धवरं मयं
परिवव्रुरुपेत्याथ तज्ज्ञानं प्राप्तुमादरात् ॥२५॥

श्रुत्वेभ्यः प्रददौ प्रीतो ग्रहाणां चरितं महत्
अत्यद्भुततमं लोके रहस्यं ब्रह्मसाम्मितम् ॥२६॥

(टीका) एषां व्याख्या सुगमा इति श्री ज्योतिर्विद्देवदत्तात्मजभूवर विरचितं सूर्यसिद्धान्तविवरणे मानाध्यायश्चतुर्थः समाप्तोयं टीका १६०१
ग्रन्थसंख्या गीनतीके श्लोक ५७२८

१—लिखाई प्रायः शुद्ध है।
२—पुस्तक अच्छी अवस्था में है।

—:o:—

क्रमसंख्या ७७

## दानमयूख

भट्ट नीलकण्ठविरचित
धर्मशास्त्र। दे०ना० लिपि। पत्रसख्या १६४।
पत्र-प्रमाण ३२.४×१५.८ सैं०मी०।
पंक्तियां १३ प्रतिपृष्ठ। अक्षर ३० प्रतिपक्ति।
पाठसख्या ४७२८।

**प्रारम्भ :–**

श्रीगणेशाय नमः। ॐ नमो गुरुचरण कमलेभ्यो नमः
यो लीलया संतनुतेत्र विश्वं
तत्पालयत्यात्मनि विश्वरूपे
लयं नयत्याशु च पूर्णरूपः
शिवं तनोत्वात्मगणैर्ममासौ ॥१॥

श्रुतीः स्मृतीर्वीक्ष्य पुराणजातं
तत्तन्निबंधानपि सन्निवंधनू

श्रीशंकरात्मजश्च एव दाने
श्रीनीलकंठो विवृणोति कृत्यं ॥२॥

**समाप्ति :-**

सौभाग्यद्रव्यसंयुक्तसूर्यस्य (दानम्)

रामभक्तो महाभागे पुण्यमूर्तिर्निरामये
महाक्षोभाणि सूर्याणि मया दत्तानि जानकी
सूर्यस्य

नक्षत्रहृदशिलादानमंत्र मात्स्ये

कपिले सर्वभूतानां पूजनीयासि रोहिणी
सर्वतीर्थमयी यस्मादतः शांतिं प्रयच्छ मे

इति श्री मद्गुरुभट्टनारायणसूरिसूनुपंडितशिरोरत्नमीमांसकशंकर-भट्टात्मजभट्टनीलकंठकृते भास्करे दानमयूखः समाप्तम् ॥

१—पाठ कहीं कहीं से टूटा हुआ है।

२—लिखाई की अशुद्धियां बहुत अधिक हैं।

३—पुस्तक अच्छी अवस्था में है।

—:O:—

क्रमसंख्या ७८

## शान्तिमयूख

नीलकण्ठभट्ट विरचित
कर्मकाण्ड। दे०ना० लिपि। पत्रसंख्या १३३।
पत्र-प्रमाण ३१.५×१३.०० सें०मी०।
पंक्तियां १० प्रति पृष्ठ। अक्षर ३५ प्रतिपंक्ति।
पाठसंख्या २६६। पूर्ण।

**प्रारम्भ :-**

ॐ श्रीगणेशाय नमः ॥
यो लीलया संतनुतेत्र विश्वं
तत्पालयत्यात्मनि विश्वरूपे ॥



लयं नयत्याशु च पूर्णरूपः
शिवं तनोत्वाशु रविर्ममासौ ॥

महो महत्समाराध्य समाकर्ण्य गुरोर्गिरः ॥
समुद्यतो नीलकंठो वक्तु शान्तिकपौष्टिम् ॥२॥

**समाप्ति :-**

अहिंसकस्य दांतस्य धर्मार्जितधनस्य च
दयादाक्षिण्ययुक्तस्य सर्वे सानुग्रहा ग्रहाः ॥

अर्थान्समर्द्धयति वर्द्धयते च धर्मं
कामं प्रसाधयति तस्य पिनष्टि पाप।
यः कारयेत्सकलदोषहरामहार्थां
शान्तिं प्रशांतहृदयः पुरुषस्तदैव ॥

श्री नीलकंठ रचितः स्मृतिभास्कराख्यो
ग्रंथः पपार रसखर्षिकुसंमितेब्दे।
चैत्रे सिते रवितिथौ रविपादपद्मे
पद्मीकृतो विकसतां जनतोपकृत्यै ॥

चेत्रादतः व्रतिपर्यं रपिदुष्टभावैः
किं तेन भावनिपुण खलु संति संतः।
विदिग्धचञ्चुपुटकाकदंबकेन
पक्वं रसालफलमुसितमेव सम्यक् ॥

श्री मीमांसक भट्टशंकरात्मज भट्टनीलकंठकृते भास्करे शांति-मयूखः समाप्तिमगात् शुभम्।

१—लिखाई में अशुद्धियां बहुत अधिक हैं।

२—पुस्तक अच्छी अवस्था में है।

—:O:—

क्रमसंख्या ७९

## बृहदारण्यकोपनिषद् ।

मूलमात्र
उपनिषद् । दे०ना० लिपि । पत्र-संख्या १९ ।
पत्र-प्रमाण ३०.६×१२.६ सैं०मी० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर ६४ प्रतिपंक्ति ।
पाठ-संख्या १२१६ । केवल पांच अध्याय ।

### प्रारम्भ :–

श्रीगणेशाय नमः श्रीसरस्वत्यै नमः श्रीगुरुभ्यो नमः श्रीकृष्णपरमात्मने नमः शुभ मस्तु हरिः ॐ उशा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्यद्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः स्पर्शव ऋतवोंगानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मा७ सान्युवध्य८ सिकताः सिंधवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृंभते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक ॥१॥

### समाप्ति :–

समानसांजीवीपुत्रात्सांजीवीपुत्रो मांडूकायनिर्मांडव्यान्मांडव्यः कौत्सात्कौत्सो माहिथेर्माहिथिर्वामकक्षायणाद्वामकक्षायणः शांडिल्याच्छांडिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसोराजंस्तंवायनाद्यज्ञस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभुवब्रह्मणे नमः ॥ इति श्रीबृहदारण्यके पंचमं ब्राह्मणमष्टमोध्यायः समाप्तः । तत्सद्ब्रह्माणमस्तु० ॥

१—पाठ में कहीं कहीं अशुद्धियां हैं ।
२—काग़ज़ पुरानेपन के कारण अधिक जीर्ण हो गया है ।
३—अनेक बार छप चुकी है ।

—:o:—



क्रमसंख्या ८०—क

## मुण्डकोपनिषद् ।

मूलमात्र ।
उपनिषद् । दे०ना० लिपि । पत्र संख्या ४ ।
पत्र-प्रमाण २८.५×१०.४ सैं०मी० ।
पंक्तियां १२ प्रतिपृष्ठ । अक्षर ४६ प्रतिपंक्ति ।
पाठ-संख्या ९० । सम्पूर्ण ।

### प्रारम्भ :–

ॐ स्वस्ति श्रीगणेशाय नमः ॐ ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय-ज्येष्ठपुत्राय प्राह अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचांगिरे ब्रह्मविद्यां स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोंगिरसे परावरां शौनको ह वै महाशालोंगिरसं विधिवदुपसन्नः पप्रछ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति तस्मै स होवच द्वे विद्ये वेदितव्ये ।

### समाप्ति :–

स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रंथिभ्यो विमुक्तोमृतो भवति तदेतहृचाभ्युक्तं क्रियावंत श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एक ऋषि श्रद्धयंतः तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं तदेतत्सत्यमृषिरंगिराः पुरोवाच नैतदचीर्णव्रतोधीते नमः परमऋषिभ्यः ६ षष्ठमुंडकं इत्यथर्ववेदे मुंडकोपनिषत्समाप्त इति प्रथमोपनिषत् ॥

१—पाठ प्रायः शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।
३—छप चुकी है ।

—:o:—

क्रमसंख्या ८०—ख

## मुण्डकोपनिषद्भाष्यम् ।

श्रीमच्छङ्कराचार्यविरचितम् ।
उपनिषद् । दे०ना० लिपि । पत्र संख्या १७ ।

पत्र-प्रमाण २८.५ × १०.४ सें०मी०।
पंक्तियां १२ प्रतिपत्र। अक्षर ४६ प्रतिपंक्ति।
पाठ-संख्या २६३। पूर्ण।

## प्रारम्भ :–

ॐ स्वस्तिश्रीगणेशाय नमः। ॐ नमः परमात्मने। ॐ ब्रह्मा-देवानामित्याद्याथर्वणोपनिषदस्याश्च विद्या संप्रदायकर्तृत्वपारंपर्यलक्षणं संबंधमादावेवाह स्वयमेव स्तुत्यर्थमेवं हि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणायासेन लब्ध्वा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्यां महाकरोति स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्त्तेयुरिति प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणसंबंधमुत्तरत्र वक्ष्यति भिद्यते हृदयग्रंथिरित्यादिना।

## समाप्ति :–

सा येभ्यो ब्रह्मादिभ्यः पारंपर्य्यक्रमेण संप्राप्ता तेभ्यो नमः परम ऋषिभ्यः परमे ब्रह्म साक्षाद्दृष्टवंतो ये ब्रह्मादयोऽवगतवंतश्च ते परमर्षयस्तेभ्यो भूयोपि नमः द्विर्वचनमत्यंतादरार्थं मुंडकसमाप्त्यर्थं च। इतिश्रीगोविंद भगवत्पूज्यपाद शिष्यपरमहंसपरिव्राजकस्य श्रीमच्छंकर भगवतः कृतावाथर्वणोपनिषद्विवर्णं समाप्तं संवत् १८५३ आश्विन शुदि मंगलवार।

१—पाठ प्रायः शुद्ध है।
२—पुस्तक अच्छी अवस्था में है।
३—छप चुकी है।

—:o:—

क्रमसंख्या ८१

## ईशावस्योपनिषद्भाष्यम् (सटीकम्)।

भाष्यकारः—श्री शङ्कराचार्यः।
टीकाकारः—आनन्दगिरिः।
उपनिषद्। दे०ना० लिपि। पत्रसंख्या १२।



पत्र-प्रमाण ३०.३ × १४.८ सें०मी०।
पंक्तियां १४ प्रतिपृष्ठ। अक्षर ३८ प्रतिपंक्ति।
पाठसंख्या १६६। पूर्ण।

## प्रारम्भ :–

(आनन्दगिरिटीका) ॐ श्रीगणेशाय नमः
येनात्मना परेणेशा व्याप्तं विश्वमशेषतः
सोहं देहद्वये साक्षी वर्जितो देहतद्गुणैः ॥१॥

ईशावास्यमित्यादिमंत्रान्व्याचिख्यासुर्भगवान्भाष्यकारस्तेषां कर्म-शेषत्वशंकां तावत् व्युदस्यति तथा हि कर्मजडाः केचन मन्यते ईशावास्य-मित्यादयोमंत्राः कर्मशेषा मंत्रत्वाविशेषादिषे त्वादि मंत्रवदतः पृथक् प्रयोजनाद्यभावादव्याख्येया इति तान् प्रत्याह ईशावास्यमित्याद्य इति कर्मस्वविनियुक्ता इति।

(शाङ्कर भाष्य) ईशावास्यमित्यादयो मंत्राः कर्मस्वविनियुक्ताः तेषामकर्म शेषस्यात्मनः याथात्म्यप्रकाशकत्वात् याथात्म्यं चात्मनः शुद्धत्वापापविद्ध त्वैकत्वनित्यत्वाशरीरत्व सर्वगातत्वादिवक्ष्यमाणं तच्च कर्मणा विरुद्ध्यत इति युक्त एवैषां कर्मस्वविनियोगः॥

(मूल) ईशावास्यमिदꣳ सर्वं यत्किंच
जगत्यां जगत् तेन त्यक्तेन भुंजीथाः
मा गृधः कस्य स्विद्धनं ॥१॥

## समाप्ति :–

(मूल) अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्ति विधेम ॥१८॥

(शां० भा०) हे अग्ने नय गमय सुपथा शोभनेन मार्गेण सुपथेति विशेषणं दक्षिणमार्गनिवृत्यर्थं निर्विण्णोहं दक्षिणेन मार्गेण गतागतल-क्षणेनातो याचे त्वां पुनः पुनर्गमनागमनवर्जितेन शोभनेन पथा नय।

(आनन्दगिरिटीका) अमृतमिति। मुख्यामृतत्वग्रहणे हिरण्मयादि-मंत्रेण द्वारमार्गयाचनमनुपपन्नं स्यान्न तस्य प्राणा उत्क्रामंत्यत्र ब्रह्म

समश्नुत इत्यादिश्रुतेः ततो मुख्यार्थबाधाद्गौणार्थग्रहणं युक्तमित्यर्थः यस्मादर्थांतरं संगच्छते तस्मादित्युपसंहारः

ईशाप्रभृतिभाष्यस्य शंकरस्य परात्मनः।
मंदोपकृतिसिध्यर्थं प्रणीतं टिप्पणं स्फुटं ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविंदभगवत्पूज्यपादशिष्य श्रीशंकरभगवतः कृतवाजसनेयसंहितोपनिषद्भाष्यस्य श्री आनंदगिरि कृतं टिप्पणं संपूर्णम् ॥

१—पाठ प्रायः शुद्ध है।
२—पुस्तक अच्छी अवस्था में है।
३—छुप चुकी है।

—:o:—

क्रमसंख्या ८२

## काठकोपनिषद्भाष्य (सटीक)।

टीकाकार का नाम नहीं।
उपनिषद्। दे०ना० लिपि। पत्र संख्या २१।
पत्र-प्रमाण ३२.३×१७.७ सें०मी०।
पंक्तियां २१ प्रतिपत्र। अक्षर ४२ प्रतिपंक्ति।
पाठसंख्या ५७८। सम्पूर्ण।

### प्रारम्भ :–

(टीका) श्रीगणेशाय नमः ॐ

धर्माधर्माद्यसंस्पृष्टं कार्यकारणवर्जितं
कालादिभिरवच्छिन्नं ब्रह्म यत्तन्नमाम्यहं ॥१॥

यः साक्षात्कृतपरमानन्दो यावदधिकारं याम्ये पदे वर्त्तमानो कर्त्तृब्रह्मा-त्मतानुभवबलतो भूतयातनानिमित्तदोषैरलिप्तस्वभाव आचार्यो वरप्रदानेन परब्रह्मात्मैक्यविद्यामुपदिदेश यस्मै चोपदिदेश ताभ्यां नमस्कुर्वन्नाचार्यभक्तेर्विद्याप्राप्त्यंगत्वं दर्शयति ॐ नमो वैवस्वतायेति अथ शब्दो मंगलार्थः चिकीर्षितं प्रतिजानीते काठकेति।



(भाष्य) श्रीपरमात्मने नमः ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय निचिकेतसे च अथ काठकोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थमल्पग्रंथवृत्तिरारभ्यते सदेर्धातोर्विशरणगत्यवसादनार्थस्य उपनिपूर्वस्य क्विप् प्रत्ययांतस्य रूपमुपनिषदिति उप निषत् शब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषयाविद्योच्यते केनपुनरर्थयोगेन उपनिषच्छब्देन विद्योच्यते इत्युच्यते—

(मूल) उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ तस्य ह निचिकेता नाम पुत्र आस तꣳह कुमारं सँतं दक्षिणासु नीयमानासु श्रद्धा विवेश सोऽमन्यत् १ पीतोदका जग्धतृणादुग्धदोहा निरिंद्रिया आनंदा नाम ते लोका स्तान्स गच्छति ता ददत् २

### समाप्ति :–

(मूल) अंगुष्टमात्रः पुरुषोंतरात्मा
सदा जनानां हृदये संनिविष्टः
तं स्वाच्छरीरात्प्रवृहेत्
मुंजादिवेषीकां धैर्येण तं विद्यात् शुक्रममृतमिति तं विद्यात् शुक्रममृतमिति ॥१८॥

मृत्युप्रोक्तां निचिकेतोपलब्ध्वा
विद्यामेतां योगविधिं च कृत्स्नं
ब्रह्म प्राप्नोति विरजोभूद्विमृत्यु
रन्योप्येवं यो विदध्यात्ममेव ॥१९॥

स ह नावतु सह नौ भुनक्तु
स ह वीर्यं करवावहै
तेजस्विनावधीतमस्तु मा विद्विषा वहै ॥
ॐ शांतिः शांतिः शांतिः ॥२०॥

इति श्रीअथर्वणवेदे काठकोपनिषदि षष्ठी वल्ली समाप्ता
द्वितीयोऽध्यायः समाप्तः ॥२॥

(भाष्य) शिष्याचार्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषप्रसमनार्थेयं शांतिरुच्यते सह नौ अवतु पालयतु विद्यास्वरूपप्रकाशनेन स एव परमेश्वरः उपनिषत्प्रकाशितः किं च सह नौ भुनक्तु तत् फलप्रकाशनेन नौ पालयतु सहैवावां विद्याकृतं वीर्यं सामर्थ्यं करवावहै

निष्पादयावहै किं च तेजस्विनौ तेजस्विनावावयोर्यदधीतं तत्स्वधीतमस्तु अथवा तेजस्विनौ आवाभ्यां यदधीतं तदतोव तेजस्वि वीर्यवदस्त्वित्यर्थः मा विद्विषावहै शिष्याचार्यविन्योन्यं प्रमादकृतान्यायाध्ययनाध्यापनदोष-निमित्तद्वेषं मा करवावहै इत्यर्थः शांतिरितित्रिवचनं सर्वदोषोपसमनार्थं ॐ मिति समाप्त्यर्थः ।।२०।।

इति श्रीगोविंदभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य-श्रीशंकरभगवत्पादकृतौ काठकोपनिषद्भाष्यषष्ठी वल्ली समाप्ता ।।६।।

(टीका) आत्मानं देहमधिकृत्य वर्त्तते इत्यध्यात्मं प्रत्यक्स्वरूपमेव ब्रह्म प्राप्य विमृत्युर्भवति नान्यद्रूपर्मचिरादिगम्यं प्राप्य संयोगस्य वियोगा-वसानत्वादित्यर्थः एवं शब्दस्य विच्छन्देन सह संबंधः एवंविदिति २० इति श्रीशंवरस्य काठकोपनिषद्भाष्यटीका समाप्ता संपूर्णम् ६ रामाय नमः ।।

१—पाठ प्रायः शुद्ध है ।

२—पुस्तक बहुत पुरानी है परन्तु अच्छी अवस्था में है ।

३—छप चुकी है ।

—:o:—

क्रमसंख्या ८३

## गोपालतापनी-उपनिषद् (सटीक) ।

टीकाकार विश्वेश्वराचार्य ।
उपनिषद् । देवनागरी लिपि । पत्र संख्या-१० ।
पत्र-प्रमाण ३२.२ × १५.३ सैं०मी० ।
पंक्तियां १६ प्रतिपत्र । अक्षर ५८ प्रतिपंक्ति ।
पाठ-सक्या ३४४ । सम्पूर्ण ।

### प्रारम्भ :—

(टीका) ॐ नमः ।। श्रीगणेशाय नमः ।। श्रीकृष्णाय पब्रह्मणे नमः ।। ॐ परमकारुणिकतया सगुणोपासनक्रमेणाधिकारिजनानर्थनिवृत्तये सच्चिदानन्दस्वरूपश्रीकृष्णात्मतावाप्तये च श्रीगोपालविद्यामुद्दीपयंती



तापनी श्रुतिः ।। श्रोतृणामविघ्नविद्यासिद्धये सदा चारावत्रोधनाय विषयसौलभ्यप्रकाशनेन तत्प्रवृत्तिसिद्धये च प्रतिपाद्यपरमदैवतप्रणति लक्षणं मंगलं प्रकाशयति ।।

(मूल) सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ।।१।।

### समाप्ति :—

(मूल) दत्वा स्तुतिं पुण्यतमां ब्रह्मणे स्वस्वरूपिणे ।
कर्तृत्वं सर्वभूतानामंतर्धाने बभूव सः ।।

(टीका) स विष्णुः स्वमूर्त्तंये ब्रह्मणे पुण्यतमां प्रागुक्तां स्तुतिं दत्वा तथा सर्वलोकानां कर्तृत्वसामर्थ्यं ब्रह्मणे दत्वा अदृश्यो वभूव ।। मयाचेदं तत्संप्रदायतो यथा श्रुतं तथा युष्मान्प्रति प्रोक्तमित्याह ।।

(मूल) ब्रह्मणे ब्रह्मपुत्रेभ्यो नारदाद्यच्छ्रुतं तथा ।
तथा प्रोक्तं तु गान्धर्वि गच्छध्वं स्वालयान्तिकं ।।

(टीका) हे गान्धर्वि मयेद ब्रह्मपुत्रेभ्यः नारदाद्यथा श्रुतं तथा मया युष्मान्प्रति प्रोक्तं हे गान्धर्वि सर्वा यूयं स्वाश्रमप्रदेशं प्रति गच्छध्वं ।। अत्रत्यं ब्रह्मणे इति पदं पूर्वश्लोके योजितं नारदायेत्यत्र पंचम्याः सुपांसुलुगिति नारदायेत्यत्र पंचम्याः सुपां सुलुगिति ।। आद्यं तथेति पदं यथेत्यर्थे ।।ॐ।।

इति श्रीमद्विश्वेश्वराचार्यविरचितायां गोपालोत्तरतापनी-टीकायामुत्तरभागः समाप्तः ।।

इत्यथर्वणोपनिषत्सु समाप्तेयं गोपालतापनीति शिवम् ।।ॐ।।

गोपालतापनीटीका भूयात्संसारशातनी ।।
कृष्णभक्तिरसास्वादलुब्धचित्तप्रमोदिनी ।।
शुभं ।।

१—द्वितीय श्लोक से लेकर आठवें श्लोक तक का मूल भी और टीका भी लिखारी ने नहीं लिखे । प्रतीत होता है कि उस की आदर्श पुस्तक में यह भाग नहीं था ।

२—लिखाई प्रायः शुद्ध है ।

३—पुस्तक अच्छी अवस्था में है ।

४—यह टीका अप्रकाशित प्रतीत होती है ।

—:o:—

क्रमसंख्या ८४

## ऐतरेयोपनिषद्भाष्य ।

शङ्कराचार्यविरचित ।
उपनिषद् । दे०ना० लिपि । पत्र संख्या ८ ।
पत्र-प्रमाण ३१.०० × १३.४ सैं०मी० ।
पंक्तियां १७ प्रतिपृष्ठ । अक्षर ५५ प्रतिपंक्ति ।
पाठसंख्या २३३ । पूर्ण ।

### प्रारम्भ :—

श्री रामाय नमः ।। ॐ नमः ।। इति ऐतरेयोपनिषद्भाष्ये तृतीयोध्यायः परिसमाप्तम् कर्म सहाऽपरब्रह्मविषयविज्ञानेनैषा कर्मणो ज्ञान-सहितस्य परागतिरुक्थविज्ञानद्वारेणोपसंहृता एतत्सत्यं ब्रह्म प्राणाख्यं एषको देव एतस्यैव प्राणस्य सर्वे देवा विभूतय एतस्य प्राणस्यात्मभावं गच्छन् देवता अप्येतीत्युक्तं सोयं देवताप्ययलक्षणः परः परमपुरुषार्थः एष मोक्षः स चायं यथोक्तेन ज्ञानकर्मसमुच्चय साधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नाः तान्निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थमातमा वा इदमित्याद्याह ।

### समाप्ति :—

तदेवैकं सर्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते च अनेकधा एतमेके वदंत्यग्निं मनुमन्ये प्रजापति-मिंद्रमेके परे प्राणमपरे ब्रह्मशाश्वतमित्याद्या स्मृतिः स वासदेवोऽन्यो वा एवंमेतं यथोक्तं ब्रह्म वेद प्रज्ञेनात्मना येनैव प्रज्ञात्मना पूर्वे विद्यांसोऽमृता



अभूवंस्तथायमपि विद्वानेतेनैव प्रज्ञानेनात्मनास्माल्लोकादुत्क्रम्या-मुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वामृतः समभवदित्योमिति ।।

इति श्रीमत्परमहंस परिव्राजकाचार्यं श्रीगोविंदभगवत्पूज्यपाद श्रीशंकराचार्यं भगवतः कृतौ बह्वृचब्राह्मणोपनिषद्भाष्यं समाप्तम् ।। संवत् १८५३ कार्त्तिक वदि ३० ।।

१—मूल इसमें नहीं है । केवल भाष्य है ।

२—पाठ प्रायः शुद्ध है ।

३—काग़ज़ पुराना होकर टूटने लगा है ।

४—संग्रहालय के काग़ज़ों में इसका नाम ब्रह्मणोपनिषद् लिखा मिलता है । वास्तव में यह ऐतरेयोपनिषद् का शाङ्करभाष्य मात्र है ।

५—प्रकाशित हो चुका है ।

—:o:—

क्रमसंख्या ८५

## तैत्तिरीयोपनिषद् [सभाष्य] ।

श्री शंकराचार्य विरचित भाष्य ।
उपनिषद् । दे०ना० लिपि । पत्र-संख्या ५२ ।
पत्र-प्रमाण ३०.५ × १३.५ सैं०मी० ।
पंक्तियां १० प्रतिपत्र । अक्षर ३९ प्रतिपंक्ति ।
पाठ-संख्या ६३४ ।

### प्रारम्भ :—

(भाष्य) श्री गणेशाय नमः ।। ॐ नमो ब्रह्मणे ।।
ॐ यस्माज्जातं जगत्सर्वं यस्मिन्नेव विलीयते ।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ।।१।।

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदांतास्तान्नित्यं प्रणतोस्म्यहम् ।।२।।

तैत्तिरीयकसारस्य मयाचार्यप्रसादतः ॥
विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते ॥३॥

नित्यान्यधिगतानि कर्मण्युपात्तदुरितक्षयार्थानि काम्यानि च फलार्थिनां पूर्वस्मिन् ग्रंथे उक्तानि इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते कर्महेतुः कामः स्यात् प्रवर्त्तकत्वात् आप्तकामानां हि कामाभावे स्वात्मन्यवस्थानात् प्रवृत्त्यनुपपत्तिः आप्तकामत्वे चाप्तकामता आत्मा हि ब्रह्म तद्विदो हि परप्राप्तिं वक्ष्यत्यतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिरभयं प्रतिष्ठां विन्दते एतमानन्दमयमात्मानमुपसंक्रामतीत्यादिश्रुतेः काम्यप्रतिषिद्धयोरनारंभादारब्धस्य चोपभोगेन क्षयान्नित्यानुष्ठानेन प्रत्यवायाभावात् अयत्नत एव स्वात्मावस्थानं मोक्षः अथवा निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात् कर्मभ्य एव मोक्ष इति चेत् न कर्मानेकत्वात् अनेकानि ह्यारब्धफलानि अनारब्धफलानि चानेकजन्मांतरकृतानि विरुद्धफलानि कर्माणि सम्भवन्त्यतस्तेष्वनारब्धफलानामेकस्मिञ्जन्मन्युपभोगक्षयासंभवाच्छेषकर्मनिमित्तशरीरारंभोपपत्तिः कर्मशेषसद्भावसिद्धिश्च—

(मूल) ॐ शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा शन्न इंद्रो वृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥१॥ नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ॥

## समाप्ति :–

(मूल) अहमन्नमन्नमदन्तमद्मि अहं विश्वं भुवनमभ्यभवां सुवर्न ज्योतिः य एवं वेदेत्युपनिषत् ॥ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि ना वधीतमस्तु मा विद्विषावहै ॐ शांतिः शांतिः इति तैत्तिरीयोपनिषत् ॥

(भाष्य) अहमन्नमहमन्नादोहमन्नाद इत्याद्यतो भयादिदोषगंधोप्यविद्यानिमित्तो विद्योच्छेदात् ब्रह्मभूतस्य नास्तीत्यहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिर्भवतीति वास्मिन् भूतान् भुवनं अभ्यभवाम्यभिभवामि परेणेश्वरेण स्वरूपेण सुवर्णेन उपमार्थः सुवरादित्य इव सकृद्विभातमस्मदीयं ज्योतिर्ज्योतिः प्रकाश इत्यर्थः इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं तामेतां यथोक्तामुपनिषदं शांतो दान्त उपरतस्तितिक्षुः



समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्यैवं फलं यथोक्तमिति ॥

इति श्रीमद्गोविंदभगवत्पूज्यपाद शिष्य श्री······महस परिव्राजकाचार्यस्य श्री शंकरभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्यं समाप्तमिति ॥
संवत् १८६४ ॥ उदेरामेण लिखितं ॥

१—लिखाई प्रायः शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है । परन्तु काग़ज़ पुरानेपन के कारण टूटने लगा है ।
३—छप चुकी है ।

—:o:—

क्रमसंख्या ८६

# न्यायसिद्धान्तमञ्जरी ।

जानकीनाथ तर्कचूडामणिविरचिता ।
न्याय शास्त्र । दे०ना० लिपि । पत्र-संख्या २४ ।
पत्र-प्रमाण ३१.८×१५.२ सैं०मो० ।
पंक्तियां १६ प्रतिपृष्ठ । अक्षर ४३ प्रतिपंक्ति ।
पाठ-संख्या ५१६ ।

## प्रारम्भ :–

श्रीगणाधिपतये नमः
प्रणम्य परमात्मानं जानकीनाथशर्मणा ।
क्रियते युक्तिमुक्ताभिर्न्यायसिद्धान्तमञ्जरी ॥

इह किल निखिललोकविमोक्षमुख्योपायं मननोपायमात्मनस्तत्त्वज्ञानमामनन्ति तच्च प्रमाणाधीनमिति प्रमाणं निरूप्यते ।

तत्र प्रमायाः करणं प्रमाणं प्रमा च यथार्थानुभवः तदाहुराचार्याः यथार्थानुभवो मानमिति ।

ननु किमिदं याथार्थ्यं किं चानुभवत्वं उच्यते तद्वति तदवगाहित्वं याथार्थ्यं भवति हि रजते इदं रजतमिति ज्ञानं रजतत्ववति रजतत्वावगाहीति याथार्थ्यं शुक्ताविदं रजतमिति ज्ञानं न च तद्वति तदवगाहीति न यथार्थं ।

## समाप्ति :–

अथ रजतत्वेंद्रियसंनिकर्षविरहात्कथं तत्प्रकारकं प्रत्यक्षमिति चेत् सन्निहितं यत्र रजतं तत्र संयुक्तसमवायस्यान्यत्रज्ञानस्य सन्निकर्षस्य सत्त्वात् ज्ञानस्य संनिकर्षत्वे किं मानमिति चेत् रजतत्वप्रकारकप्रत्यक्ष मित्यवेहि तत्रैव किं मानमिति चेत्तत्प्रकारिकाप्रवृत्तिरिति संक्षेपः ।

इति श्री चूड़ामणिकृता न्यायसिद्धान्तमंजरी समाप्ता शुभम् संवत् १८७२ ।

१ – पाठ प्रायः शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।
३—छप चुकी है ।

—:o:—

क्रमसंख्या ८७

## तर्कप्रकाशः ।

श्रीकण्ठशर्म-विरचितः ।
न्याय शास्त्र । दे०ना० लिपि । पत्र-संख्या २२६ ।
पत्र-प्रमाण ३०.२ × १४.८ सैं०मी० ।
पंक्तियां १४ प्रतिपत्र । अक्षर ३५ प्रतिपंक्ति ।
पाठ-संख्या ६७०२ ।

## प्रारम्भ :–

ॐ स्वस्ति श्रीगणेशाय नमः
संध्यायाः प्रणतिक्षणे गिरिजया सेर्ष्यं समालोकिते
रोषं मानिनि मा कृथास्त्वदपरा नान्यास्ति वंद्या मम ।



किं तु त्वामहमानमामि मनसि ध्यात्वा तवैवाकृती-
रित्थं हर्षितशैलराजतनयादृष्टः शिवः पातु नः ॥१॥

सिद्धांतगूढवर्त्मैकभावनापरिशीलिता ।
श्रीकंठनिर्मिता सेयं कृतिरातनुतां मुदं ॥२॥

सत्येकस्मिन्नपि बाधके साधकसहस्रस्याप्यकिंचित्करत्वेन प्रतिबंधकाभावस्यावश्यापेक्षिततया प्रकृतग्रंथसमाप्तिप्रतिबंधकदुरितरूपविघ्नविघाताय कृतं भगवन्नत्यात्मकं मंगल शिष्यशिक्षार्थमादौ निबध्नाति प्रणम्येति । मंगलस्य समाप्ति प्रति विघ्नध्वंसद्वारा हेतुत्वमिति सिद्धांतस्थितिः तत्रानन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वघटकानन्यथासिद्धत्वांशग्रहे व्यापकत्वरूपांशग्रहे वा स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वेऽवश्यं यत्सत्त्वं यदभावेऽवश्यं यदभाव इति नियमघटितयोर्नियतान्वयव्यतिरेकयोः कारणत्वे मानाभावेपि अन्वयव्यतिरेकाभ्यां विशिष्टतद्रूपकारणत्वग्रहे अतिरिक्तकारणताग्रहे वा तयोर्हेतुतया तत्सहकृतप्रत्यक्षप्रमाणगम्यत्वस्य यद्यपि नात्र संभवः मंगलसत्त्वेपि समाप्त्यसत्त्वान्मंगलाभावेपि समाप्तेश्चेत्यन्वयव्यतिरेक व्यभिचारात् तथापि समाप्तिफलकत्वे लाघवमिति लाघवज्ञानसहकृतं शिष्टाचारविषयत्वहेतुकं सफलत्वानुमानमेवात्र मानं जन्मांतरीय मंगलसंदेहेन व्यतिरेकव्यभिचारसंशयेपि ग्राह्यसंशयस्यानुमित्यप्रतिबंधकतया समाप्तिकारणत्वेऽनुमितेः समाप्तिरूपकार्येण जन्मांतरीयमंगलानुमानान्न व्यतिरेकव्यभिचारः मंगले सति समाप्त्यभावश्च तत्तन्मंगलानाश्यविघ्नसत्त्वादनंतरोत्पन्नविघ्नसत्त्वाद्वेति नान्वयव्यभिचारोपि अतएव तच्छंकया मध्येपि मंगलमाचरंति एवं चाशुविनाशिनः कालांतरभाविफलजनकत्वं व्यापारं विनानुपपन्नमितिविघ्नध्वंसद्वारा समाप्ति प्रति मंगलं हेतुरिति संप्रदायः ।

## समाप्तिः–

तत्प्रकारिकेति शुक्तौ रजतप्रकारिका प्रवृत्तिरित्यथः प्रवृत्तौ तु इष्टतावच्छेदकप्रकारकज्ञानत्वेन हेतुताया व्यवस्थापितत्वादिति भावः इदं रजततया जानामीत्यनुव्यवसायोपि शुक्तिगोचररजतत्वप्रकारकप्रत्यक्षसाधकोऽध्यवसेय इति ।

अतिकर्कशतक यत् हृदब्ज्जं स्फुरित मम ।
सिद्धेश्वरीपदद्वंद्ववरस्यैतद्द्विजृंभणं ॥

योसौ काश्यां समुत्पादि विश्वनाथेन धीमता ।
तस्य श्रीकंठकृतिनः कृतिः कलयतां मुदम् ॥

इति श्रीविश्वनाथात्मजदीक्षितश्रीकंठशर्मविरचिता तर्कप्रकाशाभिधा सिद्धांतमंजरीदीपिका समाप्ताः समाप्तोयं तर्कप्रकाशाख्योग्रंथः ॥ शुभमस्तु ॥

मंगलं लेखकानां च पाठकानां च मंगलं ।
मंगलं सर्वलोकानां भूमिभूपति मंगल ॥
उभयोमंगलं भवतु ॥

१—पाठ प्रायः शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।
३—न्यायसिद्धान्तमञ्जरी का मूल इसमें नहीं है । केवल टीका है ।
४—यह टीका कुरुक्षेत्र विश्वविद्यालय के डा० श्रीनिवास शास्त्री ने अभी १९७६ ई० में प्रकाशित कर दी है ।

—:o:—

क्रमसंख्या ८८

## मिताक्षरा (बृहदारण्यकव्याख्या) ।

नित्यानन्दाश्रमविरचिता ।
उपनिषट्टीका । दे०ना० लिपि । पत्र-संख्या ६२ ।
पत्र-प्रमाण ३२.१×१५×५ सैं०मी० ।
पंक्तियां १९ प्रतिपृष्ठ । अक्षर ६२ प्रतिपंक्ति ।
पाठसंख्या ४२८४ । पूर्ण ।

### प्रारम्भ :—

ॐ श्री गुरुगणपतिशारदाभ्यो नमः । ॐ श्रीकृष्णाय नमः

योनंतोनंतशक्तिः सृजति जगदिदं पालयत्यंतरात्मा
संविश्यांते निपीय स्वकमहिमगतः सत्यचिन्मूर्त्तिरास्ते ।



योनुग्रः सज्जनानां परमहिततमः पापिनामुग्रमूर्त्तिः
सोस्माकं वांछितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥१॥

यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदा भिदाग्रहगणा नेशुः स्म संतापिनः ।
यत्संसारपरिश्रमापहृदायासशीतलामोदभाग्
वंदे तत्पुरुषोत्तमाश्रमगुरोः पादारविंदद्वयं ॥२॥

या काण्वोपनिषत्प्रसिद्धबृहदारण्यश्रुतेः सादर
तद्भाष्यप्रमुखं विलोक्य विपुला टीका कृता ज्ञानिनां ।
रम्या तत्कलनासमर्थमतिभिर्मोक्षेच्छुभिर्योगिभिः
सुज्ञेया तु मिताक्षरा पुनरियं व्याख्या मया रच्यते ॥३॥

उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैव वाच्या उप समीपस्थं प्रत्यगात्मैकत्वं निश्चितं सत्तत्पराणां सहेतुसंसार सादयती त्युपनिषदितिव्युत्पत्तेः ग्रंथस्तु विद्यासमर्पकत्वेनोपचारादुपनिषदित्युच्यते बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामंतरंगवहिरंगभूतानां बहूनामिहोपदेशादर्थतो ग्रंथपरिमाणतश्च बहुत्वात् आरण्यकत्वं चास्य नियमपूर्वकमरण्येनूच्यमानत्वात् ननु कांडयो र्नियतपौर्वापर्ये कः संबंध इति चेच्छृणु ।

### समाप्ति :—

अथानतरं समस्तस्यैव प्रवचनस्य वंशो निखिलकांडमात्रस्य सर्ववेदपरिशिष्टरूपत्वात् अयं तु स्त्रीप्राधान्येनोच्यते स्त्रीसंस्कारार्थपुत्र मंथकर्मसांनिध्यात् समानमन्यत् आदित्येन सूर्येण प्रोक्तान्यादित्यानि यद्वादित्यात्महिरण्यगर्भात्मकानि शुक्लानि शुद्धानि यद्वा ब्राह्मणेनामिश्रितमंत्रात्मकानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायंते प्रकटीक्रियंत इत्यर्थः ॥१॥ इदं तु आचार्यपरंपराकथनं सर्वासु वाजिशाखासु वेदाख्यब्रह्ममूलमारभ्य पाठव्युत्क्रमेणासांजीवीपुत्रात्सांजीविपुत्रपर्यंतं समानं आदिमध्यांतेषु कृतमंगलाः ग्रंथाः परिचारिणो भवंतोति परिशिक्षयितुमाह ब्रह्मणे नम इति ॥२॥ इति बृहदारण्यकव्याख्यायां मिताक्षरायां अष्टमाध्यायस्य पंचम ब्राह्मणं ॥

यः सद्भूतिलयस्त्रिकांडकषडध्यायप्रभेदस्फुट-
स्कंधः सत्पदपल्लवालिविलसच्छाखामयब्राह्मणः ।।
ब्रह्मात्मैक्यफलः सुवाक्यकुसुमो वशालबालांबुभाक्
संसेव्यः सततं बुधैः स बृहदारण्या'''कल्पद्रुमः ।।१।।

भाष्यवार्त्तिककृत्टीकामंथन्यारण्यकं दधि ।
विमथ्य बुद्धिरज्ज्वेदं नवनीतं समुद्धृतं ।।२।।

महतामाशयं बोद्धु माहशः कः क्षमो भवेत् ।
तथापि श्रद्धयास्माभिः सारमेतत्समुद्धृतं ।।३।।

यत्पादपद्ममकरंदरसानभिज्ञा
विश्राममा विधि यद्यपि संचरंतः ।
न प्राप्नुवंति पशुकर्मरता धनेहा-
स्तस्मै नृसिंहवपुषे हरये नमस्ते ।।४।।

एकं यद्बीजमेतज्जनयति सकलं नोप्तमन्यैर्न सिक्तं
न क्लेद्यं नैव दाह्यं भवति न च पुनः कालतो यस्य नाशः
यत्सत्तामात्रजीवीत्रिभुवनसुतरुर्भाति नाना रसाढ्य-
स्तन्नः पायादपायात्सुखकरममलं श्रीनृसिंहाभिधानं ।।५।।

इति परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानंदाश्रमविरचितायां मिताक्षरायामष्टमोध्यायः समाप्तः ।। ग्रंथसंख्या ४२८४ संवत् १८५५ माघमाससितपक्षशनैर्वासरसमन्वितदशम्यां लेखनेन परिसमाप्तो ग्रंथः ।। श्रीरामाय नमः ।। श्रीकृष्णाय नमः श्रीशिवाय नमः श्रीनृसिंहाय नमः ।

१– पाठ में कहीं-कहीं अशुद्धियां हैं ।
२—पुस्तक कई हाथों से लिखी गई है ।
३—कागज़ पुराना होते हुए भी अच्छी अवस्था में है ।
४—यह व्याख्या छप चुकी है ।

—:o:—



क्रमसंख्या ८९

# देवीभागवतम् ।

वेदव्यासरचितम् ।
पुराण । दे०ना० लिपि । पत्र-संख्या २५६ ।
पत्र-प्रमाण ३२.३ × १५.४ सैं०मी० ।
पंक्तियां १५ प्रतिपृष्ठ । अक्षर ३७ प्रतिपंक्ति ।
पाठ-संख्या ४०५९ । अपूर्ण ।

## प्रारम्भ :–

।।६०।। श्रीगणेशाय नमः ।

सर्वंचैतन्यरूपां तां विद्यामाद्यां च धीमहि ।
यया व्याप्तमिदं सर्वं बुद्धिं सा नः प्रचोदयात ।।१।।

शौनक उवाच

सूत सूत महाभाग धन्योसि पुरुषषभ ।
यदधीता त्वया सम्यक पुराणसंहिता शुभा ।।२।।

अष्टादश पुराणानि कृष्णेन मुनिनानघ ।
कथितानि सुदिव्यानि पठितानि त्वया किल ।।३।।

पंचलक्षणयुक्तानि सरहस्यानि मानद ।
त्वया ज्ञातानि सर्वाणि व्यासात्सत्यवतीसुतात् ।।४।।

अस्माकं पुण्ययोगेन प्राप्तस्त्वं क्षेत्रमुत्तमं ।
दिव्यं विनशनं पुण्य कलिदोंषविवर्जितं ।।५।।

## समाप्ति :--

व्यास उवाच

छलं वाक्यमिदं श्रुत्वा विश्वामित्रस्य भूपतिः ।
प्रत्युवाच मुनिं ब्रह्मन्धैर्यं कुरु ददाम्यहं ।।८।।

न सा जिह्वा प्रतिश्रुत्य नाकारं ब्रुवते तु या ।
सूर्यवंशोद्भवानां वै मुखे भवति सर्वथा ।।९।।

मम देहोस्ति भार्यायाः पुत्रस्य च ह्यनामयः ।
क्रीत्वा देहत्रयं नूनमृणं दास्यामि ते द्विज ।।१०।।

ग्राहक पश्य विप्रेन्द्र वाराणस्यां पुरि प्रभो ।
दासभावं गमिष्यामि सदारोहं सपुत्रकः ।।११।।

गृहाण कांचनं पूर्णं सार्द्धभारद्वयं मुने ।
मूल्येन दत्वा नः सर्वान्मंतुष्टो भव कौशिक ।।१२।।

इति श्रीभगवतीभागवते पुराणे सप्तमस्कंधे विंशोध्यायः ।।२०।।

१—लिखाई में अशुद्धियां अधिक नहीं हैं ।
२—पुस्तक कई हाथों से लिखी गई है ।
३—लेखकों ने लिखाई का सं० १८७५ दिया है ।
४—पुस्तक अच्छी अवस्था में है ।
५—प्रारम्भ से ले कर सप्तम स्कन्ध के बीसवें अध्याय तक ही है ।
६—छप चुकी है ।

—:o:—

क्रमसंख्या ९०

## ब्रह्मसूत्रवृत्तिः-ब्रह्मामृतवर्षिणी ।

रामानन्द सरस्वती विरचिता ।
वेदान्त । दे०ना० लिपि । पत्र-संख्या १९६ ।
पत्र-प्रमाण ३१.८×१४.५ सैं०मी० ।
पंक्तियां १२ प्रतिपृष्ठ । अक्षर ४५ प्रतिपंक्ति ।
पाठ-सख्या ६१३० । सम्पूर्ण ।

### प्रारम्भ :--

श्री गणेशाय नमः ।



श्रीरामचरणद्वंद्वमद्वंद्वानंदसाधनं ।
नमामि यद्रजोयोगात्पाषाणोपि सुखं गतः ।।१।।

संगतिः संशयः पूर्वपरपक्षौ तयोः फलं ।
भाष्यस्थाः श्रुतयः सर्वाः सूत्राण्यनवशेषतः ।।२।।

व्याख्यायंते स्फुटन्यायैर्मतभेदोपि कुत्रचित् ।
उच्यते सुखवोधार्थं श्रीरामो वीक्षतामिदम् ।।३।।

इह खलु नित्याध्ययनविधिनाधीतस्वाध्यायमापातज्ञानवत परमपुरुषार्थकामं ऐहिकामुष्मिकफलेषु विरक्तमुपलभमानः परमकारुणिको मुनिः सूत्रयामास अथातो ब्रह्मजिज्ञासेति ।।१।।

### समाप्ति :–

यः सर्वश्रुतिवंदिवंदिततनुर्मायात्मनिद्रां गतः
सुप्तोस्मिन्भवपत्तने परिमिते कल्पांततल्पांतरे ।
यः सर्वापरिपंथिसांगनयजप्रज्ञाप्रवाहांतज-
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः ।।१।।

अस्मिन्पद्य अध्यायचतुष्टयार्थः सूचितः ।
विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ।
व्यासवाङ्मणिसंदृब्धा प्रीतये तेस्तु सर्वदा ।।

इति श्री ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः ।।४।। इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुंदगोविंदश्रीचरणशिक्षितश्रीरामानंदसरस्वतीकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्ममृतवर्षिण्यां चतुर्थाध्यायः समाप्तः ।।४।। चतुर्ष्वध्यायेषु सर्वाणि ५५४ अधिकरण १९१ गौण सूत्र ३६३ प्रथमाध्यायेधिकरण ३९ गुण ९५ द्वि अधि ४५ गुण ११० तृतीयाध्यायेधिकरण ६७ गु ११७ चतुर्थाध्यायेधिकरण ३८ गु ४० प्र १ अधि ११ गु २० अ २ अधि ७ गु २५ प्र ३ अधि १३ गुण ३० द्वि १ अधि १३ गुण २४ द्वि २ अधि ८ गु ३१ द्वि ३ अधि १७ गुण ३६ द्वि ४ अधि ९ गुण ३३ तृ १ अधि ९ गुण २१ तृ २ अधि ८ गुण ३३ तृती ३ अधि ३६

गुण ३० तृ ४ अधि १७ गुण ३४ च १ अधि १४ गुण ५ च २ अधि ११ गुण १० च ३ अधि ६ गुण १० च ४ अधि ७ गुण १५ शुभमस्तु ।

१—पाठ प्रायः शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ९१

## न्यायमकरन्द (सटीक) ।

आनन्दबोध भट्टारक विरचित ।
टीकाकार चित्सुखमुनि ।
वेदान्त । दे०ना० लिपि । पत्र-संख्या ११४ ।
पत्र-प्रमाण ३४.५ × १९.४ सैं०मी० ।
पंक्तियां १७ प्रतिपृष्ठ । अक्षर ४० प्रतिपंक्ति ।
पाठ-संख्या २४०० । सम्पूर्ण ।

### प्रारम्भ :–

(टीका) ॐ श्रीगणेशाय नमः श्री ि।वाय नमः प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनकामः शिष्टाचारप्राप्ततया कृतमिष्टदेवतानमस्कारमाचारशिक्षार्थं प्रतिपादयन्प्रकरणस्याभिधेयसंबंधप्रयोजनानि निदर्शयति यद्भासेत्यादिना श्लोकेन तत्र जीवब्रह्मणोरेकत्व लक्षणं विषयं दर्शयितुं ब्रह्मणस्तटस्थलक्षणमाह यस्याहुर्भुवनोद्भवस्थितिलयानिति । जगत्सर्जनार्थं स्वार्थं परार्थं वा प्रवृत्तिरनुपपन्ना अवाप्तसकलकामत्वव्याघातात्सृज्यमानानां दुःखबहुलत्वानुपपत्तेश्चेतीमां शंकामपाकरोति लीलामयानिति ।

(मूल) ॐ श्रीगणेशाय नमः ।
यद्भासा निखिलं विभाति विषयो यो न स्वयं ज्योतिषां
यस्याहुर्भुवनोद्भवस्थितिलयान् लीलामयान्सूरयः ।
यं चागोचरमामनति मनसां वाचां च विश्वात्मने
तस्मै शुद्धसुखाद्वितीयवपुषे शश्वन्नमो विष्णवे ॥१॥



निबंधपुष्पजालानि समालोच्य प्रयत्नतः ।
सन्न्यायमकरंदानां संग्रहः क्रियते मया ॥२॥

### समाप्ति :–

(मूल) नाना निबन्धकुसुमप्रसवावदात
न्यायापदेशमकरंदकदंब एषः ।
आनंदबोधयतिना निधिना गुणाना
मानंदहेतुरकलंकधियां व्यधायि ॥१॥

सेवन्तां मतिमंतः सरस्वतीचद्रिकां विशदां ।
आनंदबोधशालिनः शमयतोमांतर तिमिरं ॥२॥

आनंदबोधसुकवेः सूक्ति के नाभिनंदंति ।
नो चेदरुचिनिदानं मत्सरसंज्ञं महापित्तं ॥३॥

इति श्रीआनंदबोधभट्टारकविरचितोन्यायमकरंदः समाप्तः ॥

(टीका) नानेति नानानिबंधा एव कुसुमानि तेभ्यः प्रसव उत्पत्तिर्यस्य तथोक्तः स चासाववदातन्यायापदेशमकरंदकदंबकः न्यायापदेशो न्यायाभिधानो मकरंदस्य कदंबकः समूहः कीटाद्युपद्रवपर्युषितादिदोषराहित्यमितर मकरंदकदंबेऽवदातत्वं । अत्र पुनरुपाधिबाधितत्व प्रतिकूलतर्कपराहतिवैधुर्यमनुकूलतर्कसद्भावश्चावदातत्वं तादृशो मकरन्दकदम्बो गुणानां निधिना व्यधायि विहित········यावत् कुसुमान्यपि गुणानां निधानानि अयमपि गुणानां ।

शुश्रूषां श्रवणं चैव ग्रहणं धारणं तथा ॥
ऊहापोहोर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥

इति प्रतिपादितानां निधिः तेषां ग्रंथकरणोपयुक्तत्वात् केषां किं प्रयोजनहेतुतयायं ग्रंथो विहित इत्यत आह आनंद हेतुरिति अकलंकधियांसंदेहविपर्यासासूयादिकलंकरहितबुद्धीनां भृंगायमाणानामानंद हेतुरित्यवगंतव्यंलो के मकरंदस्य भ्रमरानंदहेतुत्वादकलंकधियामानंदहेतुत्वप्रदर्शनेन च ग्रंथस्य निर्दुष्टता प्रतिपादितेति मंतव्यं दुष्टस्य तदानंदहेतुत्वाभावात् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्येण श्रीमच्चित्सुखेन मुनिना विरचिता न्यायमकरंदटीका संपूर्णम् ॥ शुभमस्तु सर्वजगतां लिख्यतं मया सूरोज्यरामेण ॥ संवत् १८९७ ॥

१—लिखाई की अशुद्धियां यत्र-तत्र हैं ।

२—पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ९२

## पाराशरस्मृतेर्व्याख्या ।

माधवामात्यविरचिता ।
धर्मशास्त्र । दे०ना० लिपि । पत्र-संख्या १६१ ।
पत्र-प्रमाण ३५.१ × १६.६ सैं०मी० ।
पंक्तियां १५ प्रतिपृष्ठ । अक्षर ४८ प्रतिपंक्ति ।
पाठ-संख्या ७२४५ ।

### प्रारम्भ :--

श्रीमते रामानुजाय नमः ॥ श्रीवेदांतमहागुरुभ्यो नमः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्या स्युस्तन्नामि गजाननं ॥

सोहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थो परं
मज्जन् सज्जनतीर्थसंगनिपुणो यद्वृत्ततीर्थाश्रयात् ।
लब्धामाकलयन् प्रनावलहरीं श्रीभारती तीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकंठमव्याहतं ॥२॥

सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पंचस्कंधकृती षडन्वयदृढः सप्तांगसर्वंसहः ।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्तोछा···धुरंधरो विजयते श्री बुक्कणः क्ष्मापतिः ॥३॥



इन्द्रस्यांगिरसो नलस्य सुमतिः शैव्यस्य मेधातिथिः
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजानिमार्गौ समिः ।
प्रत्यक्सृष्टिररुंधती सहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य रिभोरभूत्कुलगुरुर्मंत्री तथा माधवः ॥४॥

प्रज्ञामूलमही विवेकसलिलैः सिक्तावलोपघ्निका
मंत्रैः पल्लविता विशालविटपा संध्यादिभिः षड्गुणैः ।
शक्त्या कोरकिता यशः सुरभिता सिद्ध्या समुद्यत्फला
संप्राप्ता भुवि भाति नीतिलतिका सर्वोत्तरं माधवं ॥५॥

श्रीमती जननी यस्य सुकीर्त्तेर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धिसहोदरौ ॥६॥

यस्य बौधायनं सूत्रं शाखायस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ॥७॥

स माधवः सकलपुराणसंहिता-
प्रवर्त्तकः स्मृतिसुखमापराशरः ।
परावरस्मृतजगदीहिताप्तये
पराशरस्मृतिविवृत्तीं प्रवर्त्तते ॥८॥

पराशरस्मृतिः पूर्वैर्न व्याख्याता निवंधृभिः ।
मया नोमाधवार्येण ताद्व्याख्यायां प्रयत्यते ॥९॥

### समाप्ति :–

पार्वणैकोद्दिष्टयोः सन्निपाते जावालिः ।

यद्येकत्र भवेतां चेदेकोद्दिष्टं च पार्वणं ।
पार्वणं तत्र निर्वर्त्य एकोद्दिष्टं समाचरेदिति ॥

अनेकनिमित्तसन्निपाते निमित्तानुक्रमेण श्राद्धं कुर्यात् । तथा च कात्यायनः —

द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तानामनुक्रमादिति ।

यद्यप्येकदेवताकं श्राद्धद्वयमेकस्मिन्नहनि न युक्त एकानुष्ठानेनैवेतर-प्रयोजनस्यापि प्रसंगात् सिद्धेः तथापि नैमित्तिकानि वचनबलादने-कान्यप्यनुष्ठेयानि । तथा च यावालि :—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदयमिति ।

नित्यकाम्ययोरेकदेवताकयोः सन्निपाते काम्येनैव नित्यसिद्धिः ।
तदुक्तं स्मृतिसंग्रहे—काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यतीति ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कण भूपालसाम्राज्यधुरंधरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां तृतीयोध्यायः ॥३॥ शुभमंगलं दधातु । भाद्रवा कृष्णा द्वादशी चंद्रवासरे संवत् १९०१ शुभं भूयातां कल्याणमस्तु श्रीरस्तु ।

१—पाठ में अशुद्धियां हैं ।
२—पुस्तक अच्छी अवस्था में है ।
३—यह टीकामात्र है । पराशरस्मृति का मूल इसमें नहीं है ।

—:o:—

क्रमसंख्या ९३

## छान्दोग्योपनिषद् (सटीक) ।

टीका का नाम मिताक्षरा ।
टीकाकार नित्यानन्दाश्रम ।
उपनिषद् । दे०ना० लिपि । पत्र-संख्या १२६ ।
पत्र-प्रमाण ३२.३×१७ ३ सैं०मी० ।
पंक्तियां १३ प्रतिपृष्ठ । अक्षर ३६ प्रतिपंक्ति ।
पाठ-संख्या ३६८५ । सम्पूर्ण ।

### प्रारम्भ :–

(टीका) ॐ श्रीगणेशाय नमः ।



योनन्तोनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
स विश्वांते निपीय स्वकमहिमगतः सत्वचिन्मूर्त्तिरास्ते ।
योनुग्रः सज्जनानां परमहित-तमः पापिनामुग्रमूर्त्तिः
सोस्माकं वांछितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥१॥

यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशुः स्म संतापिनः ।
यत्संसारपरिश्रमापहृदयासंवीतलामोदभाग्-
वंदे तत्पुरुषोत्तमाश्रमगुरोः पादारविंदद्वयं ॥२॥

कृत्वा छांदोग्यनाम्न्या उपनिषदो विज्ञगोचरां टीकां ।
भूयोऽल्पबुद्धिगम्यां नित्यानंदो मिताक्षरां कुर्वे ॥ ३ ॥

देवतोपास्तिसहितकर्मसाध्यकेवलकर्मसाध्योरुभयोरपि मार्गयोर्नात्यंतिकी पुरुषार्थसिद्धिः काम्यफलस्य क्षयिष्णुत्वात्सातिशयत्वात्पारतंत्र्यादंगवैकल्याद्यनेकविघ्नोपहतत्वाच्च नित्यनैमित्तिकयोरपि गर्भवासादिहेतुत्वेनानर्थप्रापकत्वात् निषिद्धस्य चानर्थरूपतायाः प्रसिद्धत्वात् ततो विरक्तानां निरवद्यपुरुषार्थजिज्ञासूनामुपनिषदारभ्यते इति कांड—द्वयोर्हेतुहेतुमल्लक्षणः संबंधः तत्रोपासनानां चित्तशुद्धिद्वारा ज्ञानकारणत्वात्कारणस्य च तत्कार्यान्नियतपूर्वभावित्वप्रसिद्धेः साकारवस्तुविषयत्वेन मंदमतीनां तत्र स्थैर्यसंभवाच्च प्रागुपदेशः तत्र प्राकृते पुरुषे कर्माभ्यासस्यानादिवासनया दृढीकृतत्वात्कर्मपरित्यागेन केवलोपासने चेतः समर्पणाशक्तं रंगाववद्धकर्मसमृद्धिफलकं तावदुपासनमाह—ॐमित्येतदक्षरं वर्णमुद्गीयमुद्गीथभक्त्यवयवं परमात्मप्रतीकत्वेनोपासीत ।

(मूल) ॐ श्रीगणेशाय नमः । श्रोमित्येतदक्षरमुद्गीथमुपासीतोमिति-ह्युद्गायति तस्योपव्याख्यानमेषां भूतानां पृथिवी रसः पृथिव्या आपो रसोपामोषधयो रस ओषधीनां पुरुषो रसः ॥

### समाप्ति :—

(मूल) तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथा विधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुंबे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदयात्मनि सर्वेंद्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः सखल्वेवं वर्त्तयन्यावदायुषं

ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते ।।१५।। इति दशमः प्रपाठकः ।।१०।। छांदोग्यमुपनिषत्समाप्ता ।।

(टीका) न च पुनस्ततो ब्रह्मलोकात् महाप्रलयात्पूर्वकाले आवर्त्तते महाप्रलयानंतर च पुनरावर्त्तते एवकार्यब्रह्मप्राप्तत्वात् द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ।।१५।।

यन्मायादिकमाश्रितं बहुगुणं स्वं ब्रह्मचर्यादिति
युक्तो हृद्यवरुध्यमूर्द्धगतया नाड्याप्यसौत्रं पदं ।
कामं क्रीडति यस्तुरीयममलं सैकं शताब्दं मरौ
स्थित्वा देवपतिर्बुबोधतदहं ध्याये नृसिंहाभिधं ।।१।।

कार्यब्रह्मपदांततुंगफलवद्ध्यानप्रभेदाचलं
विश्वोद्भूतिविभूतिवादविलसद्वीचीतरंगाकुलं ।
दैन्यं मुंचत भो जना गुरुतरिं त्वारोहतालं श्रमै
र्गर्हितामनवद्यहृद्धमणाये छांदोग्यरत्नाकरं ।।२।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्य-नित्यानंदाश्रमविरचितायां मिताक्षरायामष्टमोध्यायः समाप्तः ।।

१—पाठ में यत्र-तत्र अशुद्धियां हैं

२—पुस्तक अच्छी अवस्था में है ।

—:o:—

क्रमसंख्या ९४

## सिंहासन बतीसी ।

नीतिशास्त्र । दे०ना० लिपि । पत्र-संख्या ११५ ।
पत्र-प्रमाण ३०.७×१७ सें०मी० ।
पंक्तियां १२ प्रतिपृष्ठ । अक्षर ३२ प्रतिपंक्ति ।
पाठ-संख्या २७६० ।



### प्रारम्भ :–

ॐ श्रीगणेशाय नमः । अथ राजा वीर विक्रमाजीत की सिंहासन-बतीसी लिख्यते ।

एक समै कैलास मैं पार्वतीजी न शिवजी ते पूछा । क्या पूछा । अक महाराज तुम्ह कोई असी कहानी कहो किसी राजा की । वह राजा कसा होय । जिस मैं इतने गुण होय । एक तो सीलवान होय; बुधवान हो; गुणवान हो; दयावान हो; बलवान हो । असा कोइ राजा होय । उसकी मेरे पास तुम अपनी दया कर कै किरपा करः कै सुणावो । अव मै तुम सैं बहुत बे-अदबी कर कै पुछा है । सो तुम मेरी तकसीर माफ कर कै कोई असे राजा की कहानी सुनाओ । अब ऐसैं पार्वतीजी नै सिवजी सेती कहाणी पुछी तब शिव हँस के पार्वतीजी से बोले । अक पार्वती जी ! तुम्हारी इच्छा कहाणी सुणने की है तो तुम्हारे तै असे-इ राजा की कहाणी सुनाऊं । तुम्ह सुणो । मैं तुम सै कहु हु । अक पार्वतो जी सै कैलाश पर्वत मै बैठे हुये कहाणी राजा वीर विक्रमाजीत की कहै है हे पार्वती एक समै मेनै विश्वकर्मा ते चंद्रकांत नाम सिंहासन बनवाया था सो वह सिंहासन सा विश्वकर्मा न कैसा बणाया ।

### समाप्ति :–

जब बत्तीसमी पुतली यह बात कह चुकी तब सारी बत्तीस की बत्तीस पुतली अपणा अपसरा के सा रूप बणाय कै राजा कै पास भोज के आगै आय खड़ी हूवी । अब राजा ते कहणे लगी हे राजा भोज, तेरा भला हो । तव राजा ईन्ह की तरफ देख कै अचंभे मै गया । अवर उन्ह ते पुछणै लग्या हे पुतलीहो, तुम इस सींहासन पर कहां ते आई हो । सो तुम अपणा हवाल कहो । तब पुतली बोली—हे राजा, हम इस सिंहासन पर विश्वकर्मा न स्थापन करी थी । तेरा भला होय । तुं पुन्यकरता होय ।।

इति सिंहासनबत्तीसी शिवकथन पार्वतीप्रश्न बत्तीस पुतली संपूर्णम् ।।३२।। शुभ मस्तु संवत् १९०२ भाद्रपद शुदि ६ ।

१—लेखक की लिखाई पक्की नहीं है। वह एक ही शब्द को भिन्न-भिन्न स्थानों पर भिन्न-भिन्न रूपों में लिखता गया है।

२—पुस्तक अच्छी अवस्था में है।

३—हिन्दी में सिंहासन-बत्तीसी अनेक बार छप चुकी है। परन्तु इसकी भाषा ठेठ हरियाणवी है।

—:o:—

क्रमसंख्या ६५

## खण्डनखण्डखाद्य (शाङ्करी टीका सहित)।

श्रीहर्षविरचित।
टीकाकार—श्रीशङ्कर।
वेदान्त। दे०ना० लिपि। पत्र-संख्या ४०६।
पत्र-प्रमाण ३४.७×१६.१ सैं० मी०।
पंक्तियां १२ प्रतिपृष्ठ। अक्षर ३६ प्रतिपंक्ति।
पीठ-संख्या १०५५६। सम्पूर्ण।

### प्रारम्भ :-

(टीका) ॐ स्वस्ति श्रीगणेशाय नमः। ॐ

हरिशंकरयोः सितासितं
भुजगारातिभुजङ्गलांछनं ॥
वपुरस्तु मुदे विरुद्धयो
रपि संसर्गि न भिन्नतां गतं ॥१॥

विरुद्धधर्मद्वयसंनिपाते
प्यभेद एवेति च भावयंतं ॥
पुनातु भेदप्रतिभासशून्यं
स्त्रीपुंसरूपं शिवयोः शरीरम् ॥२॥

भवनाथसूक्तिगुंफनमिहखंडनखाद्यटीकायां ॥
श्रीशंकरेण विदुषा विदुषामानंदवर्द्धनं क्रियते ॥३॥



प्रारिप्सितप्रतिबंधकदुरितनिवारणकारणेष्टदेवतानमस्काररूपं मंगलं कुर्वन्नेव प्रेक्षावत्प्रवृत्यंगप्रयोजनाभिधेयसंबंधप्रतिपादनपरः परमत-निराकरणचिकीर्षया स्वमतं ब्रह्माद्वैतमुपस्थापको वैतंडिकोपि स्वप्रौढि-प्रकटनाय सूचयन्नाह अविकल्पेति। एकः पुरुष इत्यद्वितीयब्रह्मेत्यर्थः श्रुतिषु तथा श्रुतत्वात्। यद्यथा श्रुतिषु श्रुतं तत्तथा यथा ब्रह्मण आनंदमयत्वं तथा चाद्वितीयं ब्रह्मेति स्थापनसूचनात्तमीश्वरं वंदे यो अविकल्पविषयः विकल्पः संशय स्तदविषय इत्यर्थः विरुद्धनानाप्रकारकं हि ज्ञानं संशयः स चाद्वैते न संभवति न वा सर्वसिद्धे संशयावकाश इति भावः। यद्वा विकल्पो विशिष्टज्ञानं तदविषय इत्यर्थः। अद्वैते प्रकारा-भावात् सप्रकारकज्ञानानुत्पत्तेरितिभावः।

(मूल) ॐ

अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोस्ति यः श्रुतिषु।
ईश्वरमुमया न परं वंदेऽनु मयापि तमधिगतम् ॥१॥

मानापनोदनविनोदनते गरीशे
भासेव संकुचितयोरुचितं तदिंदोः।
भेत्तुं भवानिशचितं दुरितं भवानि
नम्रीभवानि घनमंघ्रिसरोजयोस्ते ॥२॥

शब्दार्थनिर्वचनखंडनया नयंतः
सर्वत्र निर्वचनभावमखर्वगर्वान् ॥
धीरा यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमातनुध्वम् ॥३॥

अथ कथायां वादिनो नियममेतादृशं मन्यंते प्रमाणादयः सर्वतंत्र-सिद्धांततया सिद्धाः पदार्थाः संतीति कथकाभ्यामुपेयं तदपरे न क्षमते।

### समाप्ति :-

शब्दो नित्यः कृतकत्वादित्यादौ परेणोक्ते कृतकत्वादावविप्रतिपत्त-व्यत्वापत्तेरन्यतरासिद्ध्या—दुच्छेदापातात् येन हि तन्निर्वाह्यते तदनिर्वच-नोयतयापि निर्वाह्यानिर्वचनीयतैवेति तस्मात्।

तत्तुल्योहस्तदीयं च योजनंविषयांतरे ।
श्रृंखला तस्य शोषे च त्रिधा भ्रमति मत्क्रिया ।।

ग्रंथग्रथिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु ।
श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रंथिः समासादय-
त्वेतत्तकरसोर्मिमज्जनसुखेष्वासंजन सज्जनः ।।

तांबूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-
द्यः साक्षात्कुरुते समाधिषु पर ब्रह्मप्रमोदार्णवम् ।
यत्काव्यं मघुवर्षं धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ।।

इति श्रीश्रीहर्षकृतौ निर्वचनसर्वस्वखडनखडे तुरीयः संकीर्णपरिच्छेदः ।।४।। समाप्तोयं ग्रंथः ।। सख्या ११००सर्वसंख्या ४२०० संवत् ।

१ - पाठ प्रायः शुद्ध है ।

२—पुस्तक अच्छी अवस्था में है ।

३ —मूल सम्पूर्ण है । परन्तु टीका चतुर्थ खण्ड के वर्त्तमानत्वादिखण्डन पर्यंन्त ही है ।

४—यह टीका प्रकाशित हो चुकी है परन्तु बाज़ार में अप्राप्य है ।

—:o:—

क्रमसंख्या ९६

## शास्त्रसिद्धान्तलेशसङ्ग्रह (सटीक) ।

अप्पयदीक्षितविरचित ।
टीकाकार—अच्युतकृष्णानन्दतीर्थ ।
वेदान्त । दे०ना० लिपि । पत्र-संख्या २५५ ।
पत्र-प्रमाण ३२.४×२१.०० सैं०मी० ।
पंक्तियां १९ प्रतिपृष्ठ । अक्षर ३५ प्रतिपक्ति ।
पाठ-संख्या १०५९८ । सम्पूर्ण ।



**प्रारम्भ :–**

(टीका) श्रीगणेशाय नमः । ॐ
वेदवेद्यमुमाकान्तं कुमाराभ्यामलंकृत ।
नंदीशप्रमुखैः सेव्यं प्रणामामीष्टसिद्धये ।।१।।

शंकरं शंकराचार्यं व्यासं नारायणात्मकं ।
सरस्वतीं च ब्रह्माणं प्रणमामि पुनः पुनः ।।२।।

गोविंदेति समाक्रंद्य रक्षां प्राप भयातुरः ।
यं गजः करुणामूर्त्ति त गोविंद भजेन्वह ।।३।।

आपन्ना यं समाश्रित्य रक्षां प्राप सुदुर्लभां ।
कृष्णा कृष्णस्य महिषी तं कृष्ण सश्रयेन्वहम् ।।४।।

प्रकाशितब्रह्मतत्त्वं प्रकृष्टगुणशालिनं ।
प्रणवस्योपदेष्टारं प्रणमाम्यनिश गुरु ।।५।।

यो मे विश्वेश्वरक्षेत्रं विश्वेश्वरसमा गुरुः ।
समध्यास्ते स्वयं ज्योतिर्वाणीसंज्ञो भजामि तं ।।६।।

यस्य शिष्यप्रशिष्याद्यैर्व्याप्तेयं सांप्रतं मही ।
सर्वज्ञस्य गुरोस्तस्य चरणौ संश्रये सदा ।।७।।

गुरोरपि गरीयान्मे यः कलाभिरलकृतः ।।
अद्वैतानंदवाण्याख्यस्तं वन्दे शर्मवारिधिं ।।८।।

ओतप्रोतमिद सर्वं यस्मिन्सच्चित्सुखात्मके ।।
पर्यवस्यंति वेदांता यत्र चाहं तदक्षरं ।।९।।

श्रीकृष्णचरणद्वंद्वं प्रणिपत्य निबन्धनं ।।
व्याकुर्वे शास्त्रसिद्धान्तलेशसंग्रहसंज्ञितं ।।१०।।

आचार्यचरणद्वन्द्वस्मृतिर्लेखकरूपिण
मां कृत्वा कुरुते व्याख्यां नाहमत्र प्रभुर्यतः ।।११।।

कुमाराभ्यां विघ्नेश्वरसुब्रह्मण्याभ्यां । शंकर शंकरस्य शिवस्यावताररूपं । शंकराचार्यं भगवत्पादं । तथा च शिवपुराणवचनं—

व्याकुर्वंन्व्याससूत्रार्थं श्रुतेरर्थं यथोचिवान् ।।

श्रुते न्याय्यस्स एवार्थश्शंकरस्सवितानन इत्यादि ।।

व्यासं सूत्रकृतं बादरायणं । नारायणात्मकं नारायणस्यावताररूपं । तथा च वचनं—

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिरिति

न त्वन्यः पुंडरीकाक्षान्महाभारतकृद्भवेदि इत्यादि च । ब्रह्माणं सरस्वतीभर्त्तारं हिरण्यगर्भं । आपन्ना सभायां वस्त्रापहारनिमित्तामापदं प्राप्ता । रक्षां वस्त्रकोटिलाभनिमित्तां । कृष्णा द्रौपदी । कृष्णस्य अर्जुनस्य । प्रकाशित शिष्यशतेभ्य उपदिष्टं ब्रह्मतत्त्वं येन गुरुणा स तथोक्तस्तं । स्वयं ज्योतिर्वाणीसंज्ञः स्वयंप्रकाशसरस्वतीसंज्ञः । गरीयान् गुरुः । इदं सर्वं यस्मिन्सच्चित्सुखात्मके अक्षरे ब्रह्मणि ओतप्रोतमध्यस्तं वेदांताश्च यत्राक्षरे विषये पर्यवस्यन्ति तात्पर्येण बोधहोतवो भवन्ति । तदहमिति संबंधः । अक्षरे सर्वस्य ओतप्रोतत्त्वोक्त्या ब्रह्मणस्सर्वाधिष्ठानत्वरूप तटस्थलक्षणमुक्त सच्चित्सुखात्मकइत्यनेन सत्यं ज्ञानानंदस्वरूपात्मकं स्वरूपलक्षणमुक्तं तत्र वेदांतानां पर्यवसानोक्त्या उक्तरूपे ब्रह्मण्यक्षरे वेदांता एव प्रमाणमित्युक्तं । नाहमत्र प्रभुर्यंत इत्यत्र व्याख्याने प्रभुस्समर्थ इत्यर्थः ।

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनयोस्सिद्धये भगवत्पादीयभाष्यस्तुतिप्रमुखेन भाष्यप्रतिपाद्यब्रह्मतत्त्वानुसंधानलक्षणं मंगलानुचरणं करोति अधिगतभिदेति दृष्टांतमुखेन श्रीमूर्त्तिचरणारविंदगंगयोरनुसंधानलक्षणमर्पिमंगलं करोति शौरीति ।

(मूल) अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्त्रधा
सरिदिव महीभेदान्संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखांबुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ।।१।।

प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं
संनह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः ।
तन्मूलानिह संग्रहेण कतिचित्सिद्धान्तभेदान्धियः
शुद्ध्यै सकलयामि तातचरणव्याख्यावचः ख्यापितान् ।।२।।



तेषूपपादनापेक्षान्पक्षान्प्रायो यथामति ।
युक्त्योपपादयन्नेव लिखाम्यनतिविस्तरान् ।।३।।

## समाप्ति :-

(मूल) विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरंगराजमखिनः श्रितचंद्रमौलि
रस्याप्पदीक्षित इति प्रथितस्तनूजः ।।

तन्त्राण्यधीत्य सकलानि सदावदात
व्याख्यानकौशलकलाविशदीकृतानि
आम्नायमूलमनुरुध्य च संप्रदायं
सिद्धांतभेदलवग्रसंहमित्यकार्षीत् ।।

इति शास्त्रसिद्धान्तलेशसंग्रहे चतुर्थः परिच्छेदः संपूर्णम् ।

(टीका) मुक्तस्येश्वरभावापत्तिमुपपादितामुपसंहरति तस्मादिति उदाहृतश्रुतिसूत्रभाष्यादिस्वारस्यादित्यर्थः अविरोधित्वमैश्वर्यविशेषणं तदनुगुणेति ऐश्वर्यानुगुणेत्यर्थः समृद्धत्वमीश्वरभावापत्तिविशेषणं ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानंदसरस्वतीदिव्यश्रीचरणारविंदसंलग्नरजोभूतस्याच्युतकृष्णानंदतीर्थस्य कृतौ शास्त्रसिद्धांतलेशसंग्रहव्याख्यायां श्रीकृष्णालंकाराख्यायां श्रीबालमुकुन्दानन्दतीर्थपादपूजाशिष्यविश्वनाथतीर्थेन ग्रंथोद्धारणं चतुर्थः परिच्छेदः समाप्तः ।

श्रीकृष्णचरणद्वन्द्वे स्मतॄणां मंगलप्रदे ।
योगिध्येये कृतिरियमलंकारार्थमर्पिता ।।

श्रीकृष्णं मनसा ध्यात्वा श्रीकृष्णं संप्रणम्य च ।
व्याख्यातोय परिच्छेदः श्रीकृष्णपरितुष्टये ।।

१– कहीं-कहीं लेखककृत अशुद्धियां रह गई हैं । अन्यथा पाठ बहुत शुद्ध है ।
२—पुस्तक अच्छी अवस्था में है ।
३—मुद्रित हो चुकी है ।

—:o:—

क्रमसंख्या ९७

## अलङ्कारकौस्तुभ (स्वोपज्ञ टीका सहित)।

विश्वेश्वरविरचित।
अलङ्कार शास्त्र। दे०ना० लिपि। पत्र-सख्या १३३
पत्र-प्रमाण ३४.३×२०.५।
पंक्तियां १८ प्रति पृष्ठ। अक्षर ३८ प्रतिपक्ति।
पाठ-सख्या ५६८५। रूपकालङ्कारपर्यन्त।

### प्रारम्भ :—

(टीका) ॐ स्वास्ति श्रीगरोशाय नमः।
वाग्देवतां द्विरदवक्त्रमपि प्रणम्य
लक्ष्मीधरस्य विदुषश्चरणावुपास्य।
भावानलंकरणकौस्तुभगुंफितान्स्वान्
विश्वेश्वरो विवरितुँ यतते समासात् ॥१॥

अभिमतकर्मसमारम्भसमये सदाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारीप्सितप्रतिबंधकदुरितनिवृत्तये कृतं मंगलं शिष्यशिक्षार्थं निबध्नाति दत्तस्तन्येति करस्य शुंडाया अग्रिमभुवा पुष्करभागेन स्कंदस्य षण्मुखत्वेनै-कमुखेन स्तनपाने मुखांतराणां तदलाभकृतवैमनस्यनिवृत्तये तेषु स्तन्यरसदानं च भगवतो लंबोदरस्य च गजमुखतया कुंभलग्नमदलुब्ध-भ्रमराणां स्कंदेन बहुभुजतया वारणमिति परस्परस्नेहवर्णनं तिर्यग्दर्शनं तदवस्थायां बालकस्वभावः स्कंदस्याल्पाच्तरत्वेपि भ्रातुर्ज्यायिस इति द्वैमातुरस्य पूर्वनिपातः गणेश्वरगुहयोर्विघ्नविघातकत्वप्रसिद्धमेव तथा च स्मृतिः।

आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा।
महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥

तत्प्रसगेन सर्ववाङ्मयरूपिण्या जगदंबिकाया अपि प्रतिसंधान तदुक्त वायुसंहितायां
शब्दस्वरूपमखिलं धत्ते शर्वस्य बल्लभा।
अर्थस्वरूपमखिलं धत्ते बालेंदुशेखरः ॥



अत्रोक्तपरमदेवताविषयकभावध्वनिः प्रधान गणेशगुहयोः परस्पर-विषयकभावश्च तदंगं स्वभावोक्तिरर्थालंकारः ॥१॥

(मूल) ॐ श्रीगणेशाय नमः।

दत्तस्तन्यरसं कराग्रिमभुवा वक्त्रांतरेष्वादराद्
दोर्विक्षेपनिषिद्धकुंभविचरन्मत्तद्विरेफोत्करं।
अंबाया धयतोः पयोधरयुगं तिर्यङ्मिथः पश्यतो-
र्बाल्यस्नेहविजृंभितं विजयते द्वैमातुरस्कंदयोः ॥१॥

लोकस्वांतघनांधकारपटलध्वंसप्रदीपांकुरो
विद्याकल्पलताप्रतानजनने बीजं निजासंगिनां।
मध्येमौलि समासता सुविमला मालयमानाश्चिरं
श्रीलक्ष्मीधरविद्वदंघ्रिनलिनोदीताः परागाणवः ॥२॥

अर्थालंकाराणां भूरिग्रंथस्थित सारं।
सुगृह्णाति सुखेन ज्ञप्त्यै विश्वेश्वरोन्येषां ॥३॥

धियां वैधेयानां भवति विषयोसावविषयो
बुधानां स्वाधानं न च कुतुकमेताहशकृते ॥
तथापीदं पारिप्लवयति मनो मे सुमहतां
निबंधानामेकीभवितुमभिसंधाननिवहः ॥४॥

### समाप्ति :—

(मूल) न च तत्रापि मुखनिष्ठाभेद एव संसर्ग इति वाच्यं तस्यप्रथममेव निरस्तत्वात् किं च शाब्दबोधे चन्द्रप्रतियोगिकाभेदभानेपि मानसगम्य परस्पराभेदमादाय तत्रापि रूपकं न स्यात् न हि शब्द एवाभेदबोधोलंकारत्व प्रयोजक इति शक्यते वक्तुं निदर्शनास्थलेऽर्थाभेदबोधस्यालंकारत्वप्रयो-जकताया त्वयैव स्वीकारात् एवं च मानसाभेदबोधस्योभयत्रैव संभवान्निदर्शना रूपकं चेति दुष्कर एकशेषः स्यात् तस्मात्त्वत्पादनख-रत्नानामित्यादौ निदर्शनैवेति वाक्यार्थरूपकं निर्मूलमिति दिक् ॥

(टीका) व्यभिचारमाह इंदुशोभामिति । तत्राश्रयत्वादिनेव शोभादेर्मुखादावारोपादिति भावः एवं चालंकारसाक्षाद्विभाजकोपाध्य-वच्छेदेन रूपके तादृशोपाधिसामानाधिकरण्येन च निदर्शनायामभेदारो-पस्यापेक्षितत्वात्तस्य रूपकपक्षपातित्वमेवेत्याशयः अभेदः समाप्तोयं रूपकालंकारः सख्या ६०००

सं १८८९ ज्ये० व० २ बु० ।

१—कहीं-कहीं लिखाई की अशुद्धियां हैं ।

२ पुस्तक अच्छी अवस्था में है ।

३—रूपकालङ्कार तक का भाग ही है ।

—:o:—

क्रमसख्या ९८

## जैमिनीयन्यायमालाविस्तरः ।

सोमयाजिभट्टमाधवविरचितः ।
मीमांसाशास्त्र । दे०ना० लिपि ।
पत्र-संख्या १९७ । पत्रप्रमाण ३५.५ × १९.०० सैं०मी० ।
पक्तियां २२ प्रतिपृष्ठ । अक्षर ४० प्रतिपंक्ति ।
पाठसंख्या १०७८० । सम्पूर्ण ।

### प्रारम्भ :—

(टीका) ॐ श्रीगणेशाय नमः । अस्या न्यायमालाया आदौ स्वकीय-ग्रंथत्वद्योतनाय स्वमुद्रारूपमनेकार्थगर्भं देवतानमस्कारप्रतिपादकं श्लोक पठति वागीशाद्या इति इष्टदेवनां नमस्कृत्य चिकीर्षितार्थप्रतिपादनाय नायके विद्यमानं महिमानमनुस्मरति युक्ति मानवतीमित्यादि अत्र चिकीर्षिते धर्मशास्त्रे वर्त्तमानानां द्वादशानामध्यायानां ये प्रतिपाद्या अर्था ये च नीतिशास्त्रोक्ता राजधर्मास्ते सर्वेपि अस्मिन्भूपतावुपलभ्यंते नीति-पक्षे युक्ति मानवतीं विदन् युक्तिर्योगः संधिः सा च युक्तिर्मानवती मानः



सत्कारः चतुर्षु साम-भेद-दान-दण्डेषूपायेषु प्रथमः उपायः सामः वैरिणो बुद्धिभेदो द्वितीयः एताभ्यां दानदंडावप्युपलक्ष्येते एतैश्चतुर्भिरुपायैः विशेषेणार्थं धनं भजति प्राप्नोति एतावता शत्रुजयः प्रतिपादितः अवशिष्टेन स्वराज्यप्रतिपालनप्रकारः प्रतिपाद्यते आप्तेष्वमात्यप्रभृतिषु पुरुषेस्त्वयमीदृशस्य व्यापारस्य योग्यो नान्यस्येत्येवमाद्यूहापोहकुशलः राजसभायामेते तपस्विनः पूज्या विप्रा दक्षिणभागे उपवेशनीयाः एते च भृत्या वामभागे इतिक्रमं करोतीति क्रमकृत् तत्तत् ग्रामेष्वधिकृतान्पुरुषा-नुचितबुद्धिप्रदानेन प्रयोक्तुं निपुणः ।

(मूल) ॐ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥

युक्ति मानवतीं विदन् स्थिरधृतिर्भेदे विशेषार्थभा—
गाप्तोहः क्रमकृत्प्रयुक्तिनिपुणः श्लाध्यातिदेशोन्नतिः ।
नित्यस्फूर्त्यधिकारवान् गतसदाबाधः स्वतंत्रेश्वरो
जागर्त्ति श्रुतिमत्प्रसंगचरितः श्रीबुक्कणः क्ष्मापतिः ॥२॥

यद्ब्रह्म प्रातपाद्यते प्रगुणयत्तत्पचमूर्त्तिप्रथां
तत्रायं स्थितिमूर्त्तिमाकलयति श्रीबुक्कणः क्ष्मापतिः ।
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैरखंडितपदं सार्वज्ञ्यमुोतते ॥३॥

इंद्रस्यांगिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि—
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजातिमेर्गौतमिः ।
प्रत्यक्दृष्टिररुंधतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मंत्री तथा माधवः ॥४॥

स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः ।
अकरोज्जैमिनिमते न्यायमालां गरीयसीम् ॥५॥

तां प्रशस्य सभामध्ये वीरः बुक्कणभूपतिः ।
कुरु विस्तरमस्यास्त्वमिति माधवमादिशत् ॥६॥

स भव्यां भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपामव्याहतां लब्ध्वा परार्द्धप्रतिमोभवत् ।।७।।

निर्माय माधवाचार्यो विद्वदानंदकारिणीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये ।।८।।

## समाप्ति :-

(मूल) आर्त्विज्यं किं त्रिवर्णस्थं विप्रयोग्येव वाग्रिमः ।
विद्यावत्त्वान्न तद्युक्तं ब्राह्मणस्यैव तत्स्मृतम् ।।

(टीका) विप्रक्षत्रियवैश्यानामधीतवेदानां विद्यावत्त्वादार्त्विज्यमस्त्विति चेन्न विप्रस्यैवार्त्विज्यस्मरणात् तथा च याज्ञवल्क्यः प्रतिग्रहोधिको विप्रे याजनाध्यापने तथेति एवं स्मृत्यंतराण्युदाहार्याणि तस्माद्विप्रस्यैवार्त्विज्यं ।

देवानां स्थितिकृत्पुरा हरिरभूत्तत्सूत्रकृज्जैमिनि—
स्तद्भाष्य शबरोभ्यधाद्गदितवांस्तद्विस्तर माधवः ।
सोमो नित्यकलत्रपुत्रजनकप्रज्ञाधिपत्यस्मृति—
दीर्घायुः सह बंधुभिर्विजयतामाचंद्रमातारकं ।।

इति श्रीमत्त्रिकांडमीमांसामंडनप्रतिचसंतसोमयाजिभट्टमाधवविरचिते जैमिनी—न्यायमालाविस्तरे द्वादशाध्यायस्य चतुर्थपादेन सह अध्यायः समाप्तः ।

१—कहीं-कहीं लिखाई की अशुद्धियां हैं ।

२—पुस्तक अच्छी अवस्था में है और डेढ़ सौ वरस के लगभग पुरानी है ।

३—जैमिनीय सूत्र, अधिकरणन्यायमाला तथा न्यायमालाविस्तार नामक टीका ये तीनों ही इसमें हैं ।

४—प्रकाशित हो चुकी है ।

—:o:—



क्रमसंख्या ९९

# सूतसंहिता (सटीका) ।

व्यासमुनि विरचिता ।
टीकाकारः माधवः ।
पुराण । दे०ना० लिपि । पत्र-सख्या २९६ ।
पत्र-प्रमाण ३२.८×१८.३ सैं०मी० ।
पक्तियां १९ प्रतिपृष्ठ । अक्षर ४४ प्रतिपंक्ति ।
पाठ-संख्या १५४६६ । सम्पूर्ण ।

## प्रारम्भ :-

(टीका) श्रीगणेशाय नमः ।

प्रणामामि परं ब्रह्म यतो व्यावृत्तवृत्तयः ।
अविचारसहं वस्तु विषयीकुर्वते धियः ।।१।।

श्रीमत्काशीविलासाख्यक्रिया शक्तीशसेविना ।
श्रीमत्त्र्यंबकपादाब्जसेवानिष्णातचेतसा ।।२।।

वेदशास्त्रप्रतिष्टात्रा श्रीमन्माधवमंत्रिणा ।
तात्पर्यदीपिका सूतसंहिताया विधीयते ।।३।।

क्रियते तत्तत्प्रकरणतात्पर्यप्रथनपूर्वकं विशदं ।
विषमपदवाक्यविवरणं मंदधियामनुग्रहाय भक्त्या च ।।४।।

(मूल) श्रीगणेशाय नमः ।

सौम्यं महेश्वरं साक्षात्सत्यविज्ञानमद्वयं ।
वंदे संसाररोगस्य भेषजं परमं मुदा ।।१।।

यस्य शक्तिरुमादेवो जगन्माता त्रयीमयी ।
तमहं शंकरं वंदे महामायानिवृत्तये ।।२।।

यस्य विघ्नेश्वरः श्रीमान्पुत्रः स्कदस्च वीर्यवान् ।
तं नमामि महादेवं सर्वदेवंनमस्कृतं ।।३।।

यस्य प्रसादलेशस्य लेशलेशलवांशकं ।
लब्ध्वा मुक्तोभजेज्जंतुस्त वंदे परमेश्वरं ।।४।।

यस्य लिंगार्चनेनैव व्यासः सर्वार्थवित्तमः ।
अभवंतं महेशानं प्रणमामि घृणानिधिं ।।५।।

यस्य मायामयं सर्वं जगदीक्षणपूर्वकं ।
तं वंदे शिवमीशानं तेजोराशिमुमापतिं ।।६।।

यः समस्तस्य लोकस्य चेतनाचेतनस्य च ।
सक्षी सर्वांतरः शंभुस्तं वंदे सांबमीश्वरं ।।७।।

## समाप्ति :–

देवाः सर्वे दंडवद्भू मिभागे
भक्त्या सार्द्धं पद्मयोनिं प्रणम्य ।
हृष्टात्मानः सत्यबोधैकनिष्टाः
सद्यः स्व स्वं देशमीयुर्द्विजेंद्राः ।।७४।।

इत्थं साक्षाद्ब्रह्मगीता भवद्भिः
शुद्धज्ञानैरादरेण श्रु तैव ।
मत्तः श्रद्धाभक्तियुक्तस्य विप्रा
नित्यं देया नेतरस्याति शुद्धा ।।७५।।

इति परशिवभक्तचा प्राप्तविद्यस्तु सूतः
सुखयनशिवतत्त्वप्रापिकामेव गीतां
मुनिगणहितबुद्ध्याभाष्य निर्वाणरूपं
परतरमवलोक्य प्रज्ञया मौनमाप ।।७६।।

मुनयश्च गुरुं परवेदिन
प्रणिपत्य समस्तहितप्रदं ।
हृदयस्थमहंपदलक्षितं
परमतत्त्वतयैव विदुः स्थिर ।।७७।।

इति श्रीस्कंदपुराणे सूतसंहितायां यज्ञवैभवखंडस्योपरिभागे ब्रह्मगीतासूपनिषत्सु ब्रह्मविद्यायां द्वादशोध्यायः १२ संवत् १८७२ ।



मंगलं लेखकानां च पाठकानां च मंगलं ।
मंगल सर्वलोकानां भूमिभूपतिमंगलं । उभयोर्मंगलं भवतु ।

(टीका) इति पर शिव भक्त्येति एतत्कविवाक्यं । इति श्रीमत्काशीविलासक्रियाशक्तिपरमभक्तश्रीमत्त्र्यंबकपादाब्जसेवापरायणेनोपनिषन्मार्गप्रवर्त्तकेन माधवाचार्येण विरचितायां सूतसंहितातात्पर्यदीपिकायां यज्ञवैभवण्डस्योपरिभागे ब्रह्मगीतासूपनिषत्सु ब्रह्मविद्यायां द्वादशोध्यायः १२ ।। शुभम्भूयात् ।।

१—लिखाई प्रायः शुद्ध है ।

२—आदि और अन्तवाले पत्रे पुरानेपन के कारण कुछ-कुछ टूट चले हैं ।

३—प्रकाशित हो चुकी है । परन्तु अनेक स्थानों पर इसका पाठ प्रकाशित पुस्तक (बालमनोरमा प्रेस, मद्रास) से भिन्न है ।

—:o:—

क्रमसंख्या १००

## वाराही संहिता ।

वराहमिहिराचार्यविरचिता ।
ज्यौतिष । दे०ना० लिपि । पत्रसंख्या ६८ ।
पत्र-प्रमाण ३१.७×१८.२ सैं०मी० ।
पंक्तियां १७ प्रतिपृष्ठ । अक्षर ३७ प्रतिपंक्ति ।
पाठ संख्या ३८५२ ।

## प्रारम्भ :–

श्रीगणेशाय नमः । ॐ

जयति जगतः प्रसूतिर्विश्वात्मा सहजभूषणं नभसः ।
द्रुतकन............शत मयूखमालाचितः सविता ।।१।।

प्रथममुनिकथितमवितथमवलोक्य.........रस्यार्थं ।
तानि लघुविपुलरचनाभिरुद्यतः स्पष्टमभिधातुं ।।२।।

मुनिविरचित''''''ति यच्चिरंतनं साधुतमनुजग्रथितं ।
तुल्येर्थेक्षरभेदादमंत्रके का विशेषोक्तिः ॥

क्षितितनयदिवसवारो न शुभकृदिति यदि पितामहप्रोक्ते ॥
कुजदिनमनिष्टमिति वा कोत्र विशेषो नृदिव्यकृते ॥४॥

आब्रह्मादिविनिःसृतमालक्ष्यग्रन्थविस्तरं क्रमशः ।
क्रियमाणकमेवेतत्समासतोऽतो महोत्साहः ॥५॥

आसीत्तमः किलैतत्तत्रापां तैजसे भवद्धैमे ।
स्वर्भूशकले ब्रह्मा विश्वकृदंडेर्कशशिनयनः ॥६॥

कपिलः प्रधानमाह द्रवादीन्कणभुगस्य विश्वस्य ।
कालं कारणमेके स्वभावमपरे जगुः कर्म ॥७॥

तदलमतिविस्तरेण प्रसंगवादार्थनिर्णयोतिमहान् ।
ज्योतिःशास्त्रांगानां वक्तव्यो निर्णयोत्र मया ॥८॥

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योंपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।
स्कंधेस्मिन्गणिते तया ग्रहगतिस्तंत्राभिधानस्त्वसौ
होराख्यो गवि निश्चयश्च कथितः स्कंधस्तृतीयोपरः ॥९॥

वक्रानुवक्रास्तमयोदयाद्या
स्तारा ग्रहाणां करणे मयोक्ताः ।
होरागतं विस्तरतश्च जन्म–
यात्राविवाहैः सह पूर्वमुक्तं ॥१०॥

प्रश्नप्रतिप्रश्नकथाप्रसंगान्
स्वल्पोपयोगान्ग्रहसंभवांश्च ॥
संत्यज्य फल्गूनि च सारभूतं
भूतार्थमर्थैः सकलैः प्रवक्ष्ये ॥११॥

इत्याचार्यश्रीवराहमिहिरस्य कृतौ संहितायामुपनयनाध्यायः ॥१॥
अथातः संवत्सरसूत्रं व्याख्यास्यामः ।



## समाप्ति :–

शतमिदमध्यायानां मनुपरिपटिक्रमादनुक्रांतं ।
अत्र श्लोकसहस्राण्याबद्धान्यूनचत्वारि ॥१८॥

अत्रैवांतर्भूतं परिशेषनिगदितं च यात्रायां ।
बह्वाश्चर्यं जातकमुक्तं करं च बहुचोद्यं ॥१९॥

बिभ्राणः शरदिंदुकोटिधवलां दंष्ट्रामिवोच्चैर्मतिं
कृत्वाहेः फणिमंडलेष्विवपदं रत्नावलीभानुषु
यः संमोहमहोदधेः कुमतिजग्राहात्समाकृष्टवान्
ज्योतिर्गां सुचिरं वराहमिहिर-छद्मा हरिः पातु वः ॥२०॥

इति बृ० आचार्यश्रीवराहमिहिरविरचितायां शास्त्रानुक्रमणिका-नामाध्यायः षडुत्तरशततमः ॥१०६॥

१—पाठ प्रायः शुद्ध है ।
२—पुस्तक के प्रारम्भ के दो पत्रे चूहों ने काट लिए हैं । इससे प्रारम्भ का पाठ कुछ खण्डित है । अन्यथा, पुस्तक अच्छी अवस्था में है ।
३—छप चुकी है ।

—:o:—



3115—1000—1-6-81—K.U.P.

